**सोऽस्त्रमुग्रजवमस्त्रकोविदः संदधे धनुषि वायुदैवतम् ।**
**तेन शैलगुरुमप्यपातयत्पाण्डुपत्रमिव ताडकासुतम् ॥ २८ ॥**

**अस्त्रकोविदः** अस्त्रज्ञः **स रामः उग्रजवम्** उत्कटजवं **वायुदैवतं** वायुर्दैवतं यस्य तद्वायव्यं **अस्त्रं धनुषि संदधे** संहितवान् । कर्तरि लिट् । **तेन** अस्त्रेण शैलवद् गुरुम् [ **शैलगुरुम्** ] अपि **ताडकासुतं** मारीचम् । **पाण्डुपत्रम् इव** । परिणतपर्णमिवेत्यर्थः । **अपातयत्** पातितवान् ॥

**यः सुबाहुरिति राक्षसोऽपरस्तत्र तत्र विससर्प मायया ।**
**तं क्षुरप्रशकलीकृतं कृती पत्रिणां व्यभजदाश्रमाद्बहिः ॥ २९ ॥**

**सुबाहुः इति यः अपरः राक्षसः तत्र तत्र मायया** शाम्बरविद्यया **विससर्प** संचचार । क्षुरप्रैः शकलीकृतं खण्डीकृतं [ **क्षुरप्रशकलीकृतं** ] **तं** सुबाहुं **कृती** कुशलो रामः । 'कृती च कुशलः समौ' इत्यमरः । **आश्रमाद् बहिः पत्रिणां** पक्षिणाम् । 'पत्रिणौ शरपक्षिणौ' इत्यमरः । **व्यभजत्** । विभज्य दत्तवानित्यर्थः ॥

**इत्यपास्तमखविघ्नयोस्तयोः सांयुगीनमभिनन्द्य विक्रमम् ।**
**ऋत्विजः कुलपतेर्यथाक्रमं वाग्यतस्य निरवर्तयन्क्रियाः ॥ ३० ॥**

**इति अपास्तमखविघ्नयोः तयोः** राघवयोः । संयुगे रणे साधुः सांयुगीनस्तं [ **सांयुगीनम्** ] । 'प्रतिजनादिभ्यः खञ्' इति खञ्प्रत्ययः । 'सांयुगीनो रणे साधुः' इत्यमरः । **विक्रमम् अभिनन्द्य ऋत्विजः** याज्ञिकाः । वाचि यतो वाग्यतो मानी तस्य [ **वाग्यतस्य** ] **कुलपतेः** मुनिकुलेश्वरस्य **क्रियाः** क्रतुक्रियाः **यथाक्रमं निरवर्तयन्** निष्पादितवन्तः ॥

**तौ प्रणामचलकाकपक्षकौ भ्रातरावभृथाप्लुतो मुनिः ।**
**आशिषामनुपदं समस्पृशद्दर्भपाटिततलेन पाणिना ॥ ३१ ॥**

अवभृथे दीक्षान्त आप्लुतः स्नातः [ **अवभृथाप्लुतः** ] **मुनिः** । 'दीक्षान्तोऽवभृथो यज्ञः' इत्यमरः । प्रणामेन चलकाकपक्षकौ चपलचूडौ [ **प्रणामचलकाकपक्षकौ** ] **तौ भ्रातरौ आशिषाम् अनुपदम्** अन्वग् **दर्भपाटिततलेन** कुशक्षतान्तःप्रदेशेन । पवित्रेणेत्यर्थः । **पाणिना समस्पृशत्** संस्पृष्टवान् । संतोषादिति भावः ॥

**तं न्यमन्त्रयत संभृतक्रतुर्मैथिलः स मिथिलां व्रजन्वशी ।**
**राघवावपि निनाय बिभ्रतौ तद्धनुःश्रवणजं कुतूहलम् ॥ ३२ ॥**

१ पाण्डु प० २ रामायणे मानवमित्युक्तं-मानवं परमोदारमस्त्रं परमभास्वरम् । चिक्षेप परमक्रुद्धो मारीचोरसि राघवः ॥ ३ 'विससर्ज, विजहार' इ० पा० ४ पक्षिणाम् इ. पा० । ५ रामायणे आग्नेयमस्त्रेणेत्युक्तं-विगृह्य सुमहच्चापमाग्नेयं रघुनन्दनः । सुबाहूरसि चिक्षेप स विद्धः प्रापतद्भुवि ॥ ६ वाग्जितस्य. ७ प्रधानकर्मान्ते क्रियमाणो यज्ञविशेषः । न्यूनाधिकशान्तिनिमित्तकः शेषकर्तव्यहोमो वा । ८ धनुषम्.

**ऋषिः तं प्रत्युवाच** । किमिति । **अयं** रामः **सारतः** बलेन **निशम्यतां** श्रूयताम् । **अथ वा गिरा** सारवर्णनया **कृतम्** अलम् । गीर्न वक्तव्येत्यर्थः । 'युगपर्याप्तयोः कृतम्' इत्यमरः । अव्ययं चैतत् । 'कृतं निवारणनिषेधयोः' इति गणव्याख्याने । गिरेति करणे तृतीया । निषेधक्रियां प्रति करणत्वात् । किं तु **अशनिः** वज्रं **गिरौ इव** । **चापे** धनुषि **एव भवतः** तव **व्यक्तशक्तिः** दृष्टसारः **भविष्यति** ॥

**एवमाप्तवचनात्स पौरुषं काकपक्षकधरेऽपि राघवे ।**
**श्रद्दधे त्रिदशगोपमात्रके दाहशक्तिमिव कृष्णवर्त्मनि ॥ ४२ ॥**

**एवम्** आप्तस्य मुनेर्वचनात् [ **आप्तवचनात्** ] **स** जनकः **काकपक्षकधरे** बाले **अपि राघवे** पुरुषस्य कर्म **पौरुषं** पराक्रमम् । 'हायनान्तयुवादिभ्योऽण्' इति युवादित्वादण् । 'पौरुषं पुरुषस्योक्तं भावे कर्मणि तेजसि ।' इति विश्वः । त्रिदशगोपैः इन्द्रगोपकीटैः प्रमाणमस्य त्रिदशगोपमात्रः । 'प्रमाणे द्वयसज्–' इत्यादिना मात्रच्प्रत्ययः । ततः स्वार्थे कप्रत्ययः । तस्मिन् [ **त्रिदशगोपमात्रके** ] **कृष्णवर्त्मनि** वह्नौ **दाहशक्तिम् इव** । **श्रद्दधे** विश्वस्तवान् ॥

**व्यादिदेश गणशोऽर्थ पार्श्वगान्कार्मुकाभिहरणाय मैथिलः ।**
**तैजसस्य धनुषः प्रवृत्तये तोयदानिव सहस्रलोचनः ॥ ४३ ॥**

**अथ मैथिलः पार्श्वगान्** पुरुषान् **कार्मुकाभिहरणाय** कार्मुकमानेतुम् । 'तुमर्थाच्च–' इति चतुर्थी । **सहस्रलोचनः** इन्द्रः **तैजसस्य** तेजोमयस्य **धनुषः प्रवृत्तये** आविर्भावाय **तोयदान्** मेघान् **इव गणशः** । 'संख्यैकवचनाच्च वीप्सायाम्' इति शस्प्रत्ययः । **व्यादिदेश** प्रजिघाय ॥

**तत्प्रसुप्तभुजगेन्द्रभीषणं वीक्ष्य दाशरथिराददे धनुः ।**
**विद्रुतक्रतुमृगानुसारिणं येन बाणमसृजद्वृषध्वजः ॥ ४४ ॥**

**दाशरथिः** रामः प्रसुप्तभुजगेन्द्र इव भीषणं भयंकरं [ **प्रसुप्तभुजगेन्द्रभीषणं** ], **तद्धनुः वीक्ष्य आददे** जग्राह । वृषो ध्वजचिह्नं यस्य स [ **वृषध्वजः** ] शिवः **येन** धनुषा । क्रतुरेव मृगः । विद्रुतं पलायितं क्रतुमृगमनुसरति । ताच्छील्ये णिनिः । तं **विद्रुतक्रतुमृगानुसारिणं बाणम् असृजत्** मुमोच ॥

**आततज्यमकरोत्स संसदा विस्मयस्तिमितनेत्रमीक्षितः ।**
**शैलसारमपि नातियत्नतः पुष्पचापमिव पेशलं स्मरः ॥ ४५ ॥**

---

१ 'इत्यम्' इ०, २ '०लाञ्छने' इ. च पा०. ३ लोहितः कीटविशेषः । ४ सः इ०, 'कार्मुकस्य ह०' इ० च पा०, ५ अस्मात्परं–तेपि तूर्णमवगम्य शांभवप्रासमाहरणकर्मतत्पराः । स्वांसाश्रितमतिकर्कशं हि तद्विक्षिपुर्दशरथात्मजाग्रतः ॥ इत्यधिकं पद्यमेकस्मिन्पुस्तके । ६ पुरा किल दक्षकृतयज्ञ आत्मानमवधूतं मन्यमानो धूर्जटिः देवादीन् विद्राव्य मृगरूपेण पलायमानं यज्ञं प्रमाथरुष्टं धनुरादायानुससार । तथा च भारते–ततः स यज्ञो नृपते बध्यमानः समन्ततः । आस्थाय मृगरूपं वै खमेवाभ्यगमत्तदा ॥ इ० । धनुषो वृत्तान्तस्तु रामा० बाल्का० ६६ सर्गे ७–१२ श्लोकेषु द्रष्टव्यः. ७ आत्तसज्ज इ., संसदि इ. पा. ८ कोमलं, पेलवम्, इ० पा०.

यूपवत्यवसिते क्रियाविधौ कालवित्कुशिकवंशवर्धनः ।
राममिष्वसनदर्शनोत्सुकं मैथिलाय कथयांबभूव सः ॥ ३७ ॥

यूपवति क्रियाविधौ कर्मानुष्ठाने । क्रतावित्यर्थः । अवसिते समाप्ते सति कालवित् अवसरज्ञः कुशिकवंशवर्धनः स मुनिः रामम् । अस्यतेऽनेनेत्यसनम् । इषूणामसनमिष्वसनं चापम् । तस्य दर्शने उत्सुकं [ इष्वसनदर्शनोत्सुकं ] मैथिलाय जनकाय कथयांबभूव कथितवान् ॥

तस्य वीक्ष्य ललितं वपुः शिशोः पार्थिवः प्रथितवंशजन्मनः ।
स्वं विचिन्त्य च धनुर्दुरानमं पीडितो दुहितृशुल्कसंस्थया ॥ ३८ ॥

पार्थिवः जनकः । [ प्रथितवंशजन्मनः ] । प्रथितवंशे जन्म यस्य तथोक्तस्य । एतेन वरसंपत्तिरुक्ता । शिशोः तस्य रामस्य ललितं कोमलं वपुः वीक्ष्य । स्वं स्वकीयं दुरानमम् आनमयितुमशक्यम् । नमेर्ण्यन्तात्खल् । धनुः विचिन्त्य च । दुहितृशुल्कं कन्यामूल्यं जामातृदेयम् । 'शुल्कं घट्टादिदेये स्याज्जामातुर्वन्धकेऽपि च ।' इति विश्वः । तस्य धनुर्भङ्गरूपस्य संस्थया स्थित्या [ दुहितृशुल्कसंस्थया ] । 'संस्था स्थितौ चरे नाशे' इति विश्वः । पीडितः बाधितः । शिशुना रामेण दुष्करमेतदिति दुःखित इति भावः ॥

अब्रवीच्च भगवन्मतंगजैर्यद् बृहद्भिरपि कर्म दुष्करम् ।
तत्र नाहमनुमन्तुमुत्सहे मोघवृत्ति कलभस्य चेष्टितम् ॥ ३९ ॥

अब्रवीच्च । मुनिमिति शेषः । किमिति । हे भगवन् मुने बृहद्भिः मतंगजैः महागजैः अपि दुष्करं यत्कर्म तत्र कर्मणि कलभस्य बालगजस्य । 'कलभः करिशावकः' इत्यमरः । मोघवृत्ति व्यर्थव्यापारं चेष्टितं साहसम् अनुमन्तुम् अहं न उत्सहे ।

ह्रेपिता हि बहवो नरेश्वरास्तेन तात धनुषा धनुर्भृतः ।
ज्यानिघातकठिनत्वचो भुजान्स्वान्विधूय धिगिति प्रतस्थिरे ॥ ४० ॥

हे तात तेन धनुषा बहवः धनुर्भृतः ह्रेपिताः ह्रियं प्रापिताः हि । जिह्रेतेर्णन्तात्कर्मणि क्तः । 'अर्तिह्री-' इत्यादिना पुगागमः । ते नरेश्वराः ज्यानिघातैः कठिनत्वचः [ ज्यानिघातकठिनत्वचः ] स्वान् भुजान् धिग् इति विधूय अवमत्य प्रतस्थिरे प्रस्थिताः ॥

प्रत्युवाच तमृषिर्निशम्यतां सारतोऽयमथ वा गिरा कृतम् ।
चाप एव भवतो भविष्यति व्यक्तशक्तिरशनिर्गिराविव ॥ ४१ ॥

---

१ 'दुरासदम्' इ. पा०. २ अत्र रामायणम्—वीर्यशुल्केति मे कन्या स्थापितेयमयोनिजा । इति । लक्षितसुता रामेण शिशुना कठोरस्य शिवधनुषो भङ्गो दुष्कर इत्यहो मे अदूरदर्शित्वं यदीदृशः पणः कृतः इति चिन्तयेत्यर्थः । ३ महद्भिः. ४ 'साहसम्' इ. पा० । ५ बीर्यतः.

स रामः संसदा सभया विस्मयेन स्तिमिते नेत्रे यस्मिन्कर्मणि तद्यथा स्यात्तथा [ विस्मयस्तिमितनेत्रम् ] ईक्षितः सन् । शैलस्येव सारो यस्य तत् शैलसारम् अपि धनुः । स्मरः पेशलं कोमलं पुष्पचापम् इव । नातियत्नतः नातियत्नात् । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । आततज्यम् आधिज्यं अकरोत् ॥

**भज्यमानमतिमात्रकर्षणात्तेन वज्रपरुषस्वनं धनुः ।**
**भार्गवाय दृढमन्यवे पुनः क्षत्रमुद्यतमिव न्यवेदयत् ॥ ४६ ॥**

तेन रामेण अतिमात्रकर्षणाद् भज्यमानम् अत एव वज्रपरुषस्वनम् । वज्रमिव परुषः स्वनो यस्य तत् । धनुः कर्तृ । दृढमन्यवे दृढक्रोधाय । 'मन्युः क्रोधे क्रतौ दैन्ये' इति विश्वः । भार्गवाय क्षत्रं क्षत्रकुलं पुनः उद्यतं न्यवेदयद् इव ज्ञापयामासेव ॥

**दृष्टसारमथ रुद्रकार्मुके वीर्यशुल्कमभिनन्द्य मैथिलैः ।**
**राघवाय तनयामयोनिजां रूपिणीं श्रियमिव न्यवेदयत् ॥ ४७ ॥**

अथ मैथिलः जनकः रुद्रकार्मुके दृष्टः सारः स्थिरांशो यस्य तद् दृष्टसारम् । 'सारो बले स्थिरांशे च' इति विश्वः । वीर्यमेव शुल्कम् [ वीर्यशुल्कम् ] धनुर्भङ्गरूपमित्यर्थः । अभिनन्द्य राघवाय रामाय अयोनिजां देवयजनसंभवां तनयां सीतां रूपिणीं श्रियम् इव साक्षाल्लक्ष्मीमिव न्यवेदयद् अर्पितवान् । वाचेति शेषः ॥

उक्तमेवार्थं सोपस्कारमाह—

**मैथिलः सपदि सत्यसंगरो राघवाय तनयामयोनिजाम् ।**
**संनिधौ द्युतिमतस्तपोनिधेरग्निसाक्षिक इवातिसृष्टवान् ॥ ४८ ॥**

सत्यसंगरः सत्यप्रतिज्ञः । 'अथ प्रतिज्ञाजिसंविदापत्सु संगरः' इत्यमरः । मैथिलः राघवाय अयोनिजां तनयां द्युतिमतः तेजस्विनः तपोनिधेः कौशिकस्य संनिधौ । अग्निः साक्षी यस्य सः अग्निसाक्षिकः । 'शेषाद्विभाषा' इति कप्रत्ययः । स इव सपदि अतिसृष्टवान् दत्तवान् ॥

**प्राहिणोच्च महितं महाद्युतिः कोसलाधिपतये पुरोधसम् ।**
**भृत्यभावि दुहितुः परिग्रहाद्दिश्यतां कुलमिदं निमेरिति ॥ ४९ ॥**

महाद्युतिः जनकः महितं पूजितं पुरोधसं पुरोहितं कोसलाधिपतये दशरथाय प्राहिणोत् प्रहितवान् च । किमिति । निमिर्नाम जनकानां पूर्वजः कश्चित् ।

---

१ तत्स्वनेन गगनस्पृशा. २ उत्थितम्. ३ 'पार्थिवः' । ४ स्वां ददौ श्रियमिवामरद्युतिः इ० कार्जिनी च तनयां, स पार्थिवीं रूपिणीं इ. च पा० । ५ तदुक्तं रामायणे–अथ मे कृषतः क्षेत्रं लाङ्गलादुत्थिता ततः । क्षेत्रं शोधयता लब्धा नाम्ना सीतेति विश्रुता ॥ पाद्मे च–अथ लोकेश्वरी लक्ष्मीर्जनकस्य पुरे स्वतः । शुभक्षेत्रे हलोत्खाते तारे चोत्तरफाल्गुने ॥ अयोनिजा पद्मकरा बालार्कशतसंनिभा । सीतामुखे समुत्पन्ना बालभावेन सुन्दरी ॥ सीतामुखोद्भवात्सीता इत्यस्यै नाम चाकरोत् । ६ 'साक्षिकं' इ. पा०. ७ अग्निसमक्षमेव विवाहकार्यस्य विधिबोधितत्वात् । उक्तं च–अग्निसाक्षिकमर्यादो भर्ता हि शरणं स्त्रियाः । इति । ८ महीपतिः, महारथः, इ. पुरो०–पुरोहितम् इ. च पा०, ९ दीक्ष्यतां, इष्यताम्, इ. पा०.

एवमात्तरतिः अनुरागवान् स दशरथः तान् चतुरः अपि आत्मसंभवान् पुत्रान् तत्र मिथिलायां निवेश्य विवाह्य । 'निवेशः शिबिरोद्वाहविन्यासेषु प्रकीर्तितः' । इति विश्वः । त्रिषु अध्वसु प्रयाणेषु सत्सु विसृष्टमैथिलः सन् । स्वां पुरीं न्यवर्तत । उद्देशक्रियापेक्षया कर्मत्वं पुर्याः ॥

**तस्य जातु मरुतः प्रतीपगा वर्त्मसु ध्वजतरुप्रमाथिनः ।**
**चिक्लिशुर्भृशतया वरूथिनीमुत्तटा इव नदीरयाः स्थलीम् ॥ ५८ ॥**

जातु कदाचित् वर्त्मसु ध्वजा एव तरवस्तान्प्रमथ्नन्ति ये ते ध्वजतरुप्रमाथिनः प्रतीपगाः प्रतिकूलगामिनः मरुतः । उत्तटाः नदीरयाः स्थलीम् अकृत्रिमभूमिम् इव । 'जानपदकुण्ड–' इत्यादिना ङीप् । तस्य वरूथिनीं सेनां भृशतया भृशं चिक्लिशुः क्लिश्यन्ति स्म ॥

**लक्ष्यते स्म तदनन्तरं रविर्बद्धभीमपरिवेषमण्डलः ।**
**वैनतेयशमितस्य भोगिनो भोगवेष्टित इव च्युतो मणिः ॥ ५९ ॥**

तदनन्तरं प्रतीपपवनानन्तरं बद्धं भीमं परिवेषस्य परिधेर्मण्डलं यस्य स [ बद्धभीमपरिवेषमण्डलः ] । 'परिवेषस्तु परिधिरुपसूर्यकमण्डले ।' इत्यमरः । रविः वैनतेयशमितस्य गरुडहतस्य भोगिनः सर्पस्य भोगेन कायेन । 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः ।' इत्यमरः । वेष्टितः [ भोगवेष्टितः ] च्युतः शिरोभ्रष्टः मणिः इव । लक्ष्यते स्म ॥

**श्येनपक्षपरिधूसरालकाः सांध्यमेघरुधिरार्द्रवाससः ।**
**अङ्गना इव रजस्वला दिशो नो बभूवुरवलोकनक्षमाः ॥ ६० ॥**

[ श्येनपक्षपरिधूसरालकाः ] श्येनपक्षा एव परिधूसरा अलका यासां तास्तथोक्ताः । सांध्यमेघा एव रुधिरार्द्राणि वासांसि यासां तास्तथोक्ताः [ सांध्यमेघरुधिरार्द्रवाससः ] । रजो धूलिरासामस्तीति रजस्वलाः । 'रजःकृष्यासुतिपरिषदो वलच्' इति वलच्प्रत्ययः । दिशः । रजस्वला ऋतुमत्यः अङ्गनाः इव । 'स्याद्रजः पुष्पमार्तवम्' इत्यमरः । अवलोकनक्षमाः दर्शनार्हाः नो बभूवुः । एकत्राहृष्टदोषादपरत्र शास्त्रदोषादिति विवेयम् । अत्र रजोवृष्टिरुत्पात उक्तः ॥

**भास्करश्च दिशमध्युवास यां तां श्रिताः प्रतिभयं ववासिरे ।**
**क्षत्रशोणितपितृक्रियोचितं चोदयन्त्य इव भार्गवं शिवाः ॥ ६१ ॥**

भास्करः यां दिशम् अध्युवास च यस्यां दिश्युषितः । 'उपान्वध्याङ्वसः' इति

---

१ अयं शिष्टाचारः । एवं सप्तमसर्गेऽपि-'तिसृस्त्रिलोकप्रथितेन' इ०. २ 'वर्त्मनि' इ० ३ 'उद्धताः' इ० च पा०. ४ वेष्टनः. ५ सान्द्र. ६ नोदयन्त्यः, प्रेरयन्त्यः, बोधयन्त्यः इ. पाठा०.

:तनयकौतुकक्रियां ] कन्यकानां सीतादीनां तनयानां रामादीनां च कौतुकक्रियां विवाहोत्सवं वितेनतुः विस्तृतवन्तौ । तनोतेर्लिट् ॥

पार्थिवीमुदवहद्रघूद्वहो लक्ष्मणस्तदनुजामथोर्मिलाम् ।
यौ तयोरवरजौ वरौजसौ तौ कुशध्वजसुते सुमध्यमे ॥ ५४ ॥

उद्वहतीत्युद्वहः । पचाद्यच् । रघूणामुद्वहो रघूद्वहः रामः । पृथिव्या अपत्यं स्त्री पार्थिवी । 'तस्यापत्यम्' इत्यणि 'टिड्ढा–' इति ङीप् । तां [ पार्थिवीं ] सीताम् उदवहत् परिणीतवान् । अथ लक्ष्मणः तस्याः सीताया अनुजां [ तदनुजाम् ] जनकस्यौरसीम् ऊर्मिलाम् उदवहत् । यौ वरौजसौ तयोः रामलक्ष्मणयोः अवरजौ अनुजातौ भरतशत्रुघ्नौ तौ सुमध्यमे कुशध्वजस्य जनकानुजस्य सुते कन्यके [ कुशध्वजसुते ] माण्डवीं श्रुतकीर्तिं चोदवहताम् । नात्र व्युत्क्रमविवाहदोषो भिन्नोदरत्वात् । तदुक्तम्—' पितृव्यपुत्रे सापत्ने परनारीसुतेषु च । विवाहाधानयज्ञादौ परिवेत्ताद्यदूषणम् ॥ ' इति ॥

ते चतुर्थसहितास्त्रयो बभुः सूनवो नववधूपरिग्रहाः ।
सामदानविधिभेदनिग्रहाः सिद्धिमन्त इव तस्य भूपतेः ॥ ५५ ॥

ते चतुर्थसहिताः त्रयः । चत्वार इत्यर्थः । वृत्तानुसारादेवमुक्तम् । सूनवः नववधूपरिग्रहाः । सिद्धिमन्तः फलसिद्धियुक्ताः तस्य भूपतेः दशरथस्य सामदानविधिभेदनिग्रहाः चत्वार उपायाः इव बभुः । विधीयत इति विधिः । दानमेव विधिः । निग्रहो दण्डः । सूनूनामुपायैर्वधूनां सिद्धिभिश्चौपम्यमित्यनुसंधेयम् ॥

ता नराधिपसुता नृपात्मजैस्ते च ताभिरगमन्कृतार्थताम् ।
सोऽभवद्वरवधूसमागमः प्रत्ययप्रकृतियोगसंनिभः ॥ ५६ ॥

ताः नराधिपसुताः जनककन्यकाः नृपात्मजैः दशरथपुत्रैः कृतार्थतां कुलशीलवयोरूपादिसाफल्यम् अगमन् । ते च ताभिः तथा । किं च । स वराणां वधूनां च समागमः [ वरवधूसमागमः ] । [ प्रत्ययप्रकृतियोगसंनिभः ] प्रत्ययानां प्रकृतीनां च योग इव संनिभातीति संनिभः । अभवत् । पचाद्यच् । प्रत्ययाः सनादयो येभ्यो विधीयन्ते ताः प्रकृतयः । यथा प्रकृतिप्रत्यययोः सहैकार्थसाधनत्वं तद्वदत्रापीति भावः ॥

एवमात्तरतिरात्मसंभवांस्तान्निवेश्य चतुरोऽपि तत्र सः ।
अध्वसु त्रिषु विसृष्टमैथिलः स्वां पुरीं दशरथो न्यवर्तत ॥ ५७॥

१ 'मैथिलीम्' इ. २ 'लक्ष्मणस्तदनुजामथोर्मिलाम्' इ. च पा०. ३ सीताकारणे भ्रातरं रामचन्द्रं दृष्टवान् । कनीयानेष मे भ्राता अहं ज्येष्ठो महामुने ॥ इ० रामा०. ४ 'परिग्रहात्' इ० पा०. ५ 'साम सदिविमुखाः' इ० पा०. ६ वः शब्दः स्वैराचारार्थे स्वार्थसाम्यबोधने । मध्वेस्मन्ये पूर्वो प्रकृतिः प्रत्ययः परः ॥ इति हरिका०.

एवमात्तरतिः अनुरागवान् स दशरथः तान् चतुरः अपि आत्मसंभवान् पुत्रान् तत्र मिथिलायां निवेश्य विवाह्य । 'निवेशः शिबिरोद्वाहविन्यासेषु प्रकीर्तितः' । इति विश्वः । त्रिषु अध्वसु प्रयाणेषु सत्सु विसृष्टमैथिलः सन् । स्वां पुरीं न्यवर्तत । उद्देशक्रियापेक्षया कर्मत्वं पुर्याः ॥

तस्य जातु मरुतः प्रतीपगा वर्त्मसु ध्वजतरुप्रमाथिनः ।
चिक्लिशुर्भृशतया वरूथिनीमुत्तटा इव नदीरयाः स्थलीम् ॥ ५८ ॥

जातु कदाचित् वर्त्मसु ध्वजा एव तरवस्तान्प्रमथ्नन्ति ये ते ध्वजतरुप्रमाथिनः प्रतीपगाः प्रतिकूलगामिनः मरुतः । उत्तटाः नदीरयाः स्थलीम् अकृत्रिमभूमिम् इव । 'जानपदकुण्ड–' इत्यादिना ङीप् । तस्य वरूथिनीं सेनां भृशतया भृशं चिक्लिशुः क्लिश्यन्ति स्म ॥

लक्ष्यते स्म तदनन्तरं रविर्बद्धभीमपरिवेषमण्डलः ।
वैनतेयशमितस्य भोगिनो भोगवेष्टित इव च्युतो मणिः ॥ ५९ ॥

तदनन्तरं प्रतीपपवनानन्तरं बद्धं भीमं परिवेषस्य परिधेर्मण्डलं यस्य स [ बद्धभीमपरिवेषमण्डलः ]। 'परिवेषस्तु परिधिरुपसूर्यकमण्डले ।' इत्यमरः । रविः वैनतेयशमितस्य गरुडहतस्य भोगिनः सर्पस्य भोगेन कायेन । 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः ।' इत्यमरः । वेष्टितः [ भोगवेष्टितः ] च्युतः शिरोभ्रष्टः मणिः इव । लक्ष्यते स्म ॥

श्येनपक्षपरिधूसरालकाः सांध्यमेघरुधिरार्द्रवाससः ।
अङ्गना इव रजस्वला दिशो नो बभूवुरवलोकनक्षमाः ॥ ६० ॥

[ श्येनपक्षपरिधूसरालकाः ] श्येनपक्षा एव परिधूसरा अलका यासां तास्तथोक्ताः । सांध्यमेघा एव रुधिरार्द्राणि वासांसि यासां तास्तथोक्ताः [ सांध्यमेघरुधिरार्द्रवाससः ] । रजो धूलिरासामस्तीति रजस्वलाः । 'रजःकृष्यासुतिपरिषदो वलच्' इति वलच्प्रत्ययः । दिशः । रजस्वला ऋतुमत्यः अङ्गनाः इव । 'स्याद्रजः पुष्पमार्तवम्' इत्यमरः । अवलोकनक्षमाः दर्शनार्हाः नो बभूवुः । एकत्राद्दष्टदोषादपरत्र शास्त्रदोषादिति विनेयम् । अत्र रजोवृष्टिरुत्पात उक्तः ॥

भास्करश्च दिशमध्युवास यां तां श्रिताः प्रतिभयं ववासिरे ।
क्षत्रशोणितपितृक्रियोचितं चोदयन्त्य इव भार्गवं शिवाः ॥ ६१ ॥

भास्करः यां दिशम् अध्युवास च यस्यां दिश्युषितः । 'उपान्वध्याङ्वसः' इति

---

१ अयं शिष्टाचारः । एवं सप्तमसर्गेऽपि-'तिसृभिस्त्रिलोकमथितेन' इ०. २ 'वर्त्मनि' इ० ३ 'अङ्गनाः' इ० च पा०. ४ वेष्टनः. ५ सान्द्र. ६ नोदयन्त्यः, प्रेरयन्त्यः, बोधयन्त्यः इ. पाठा०.

:तनयकौतुकक्रियां ] कन्यकानां सीतादीनां तनयानां रामादीनां च कौतुकक्रियां विवाहोत्सवं वितेनतुः विस्तृतवन्तौ । तनोतेर्लिट् ॥

**पार्थिवीमुदवहद्रघूद्वहो लक्ष्मणस्तदनुजामथोर्मिलाम् ।**
**यौ तयोरवरजौ वरौजसौ तौ कुशध्वजसुते सुमध्यमे ॥ ५४ ॥**

उद्वहतीत्युद्वहः । पचाद्यच् । रघूणामुद्वहो **रघूद्वहः** रामः । पृथिव्या अपत्यं स्त्री पार्थिवी । 'तस्यापत्यम्' इत्यणि 'टिड्ढा–' इति ङीप् । तां [ **पार्थिवीं** ] सीताम् **उदवहत्** परिणीतवान् । **अथ लक्ष्मणः** तस्याः सीताया अनुजां [ **तदनुजाम्** ] जनकस्यौरसीम् **ऊर्मिलाम्** उदवहत् । **यौ वरौजसौ** **तयोः** रामलक्ष्मणयोः **अवरजौ** अनुजातौ भरतशत्रुघ्नौ **तौ सुमध्यमे** कुशध्वजस्य जनकानुजस्य सुते कन्यके [ **कुशध्वजसुते** ] माण्डवीं श्रुतकीर्तिं चोदवहताम् । नात्र व्युत्क्रमविवाहदोषो भिन्नोदरत्वात् । तदुक्तम्—' पितृव्यपुत्रे सापत्ये परनारीसुतेषु च । विवाहाधानयज्ञादौ परिवेत्तायदूषणम् ॥ ' इति ॥

**ते चतुर्थसहितास्त्रयो बभुः सूनवो नववधूपरिग्रहाः ।**
**सामदानविधिभेदनिग्रहाः सिद्धिमन्त इव तस्य भूपतेः ॥ ५५ ॥**

**ते चतुर्थसहिताः त्रयः** । चत्वार इत्यर्थः । वृत्तानुसारादेवमुक्तम् । **सूनवः नववधूपरिग्रहाः** । **सिद्धिमन्तः** फलसिद्धियुक्ताः **तस्य भूपतेः** दशरथस्य **सामदानविधिभेदनिग्रहाः** चत्वार उपायाः **इव बभुः** । विधीयत इति विधिः । दानमेव विधिः । निग्रहो दण्डः । सूनूनामुपायैर्वधूनां सिद्धिभिश्चौपम्यमित्यनुसंधेयम् ॥

**ता नराधिपसुता नृपात्मजैस्ते च ताभिरगमन्कृतार्थताम् ।**
**सोऽभवद्वरवधूसमागमः प्रत्ययप्रकृतियोगसंनिभः ॥ ५६ ॥**

**ताः नराधिपसुताः** जनककन्यकाः **नृपात्मजैः** दशरथपुत्रैः **कृतार्थतां** कुलशीलवयोरूपादिसारूप्यम् **अगमन्** । **ते च ताभिः** तथा । किं च । **स** वराणां वधूनां च समागमः [ **वरवधूसमागमः** ] । [ **प्रत्ययप्रकृतियोगसंनिभः** ] प्रत्ययानां प्रकृतीनां च योग इव संनिभातीति संनिभः । **अभवत्** । पचाद्यच् । प्रत्ययाः सनादयो येभ्यो विधीयन्ते ताः प्रकृतयः । यथा प्रकृतिप्रत्यययोः सहैकार्थसाधनत्वं तद्वदत्रापीति भावः ॥

**एवमात्तरतिरात्मसंभवांस्तान्निवेश्य चतुरोऽपि तत्र सः ।**
**अध्वसु त्रिषु विसृष्टमैथिलः स्वां पुरीं दशरथो न्यवर्तत ॥ ५७॥**

एवमात्तरतिः अनुरागवान् स दशरथः तान् चतुरः अपि आत्मसंभवान् पुत्रान् तत्र मिथिलायां निवेश्य विवाह्य । 'निवेशः शिबिरोद्वाहविन्यासेषु प्रकीर्तितः' । इति विश्वः । त्रिषु अध्वसु प्रयाणेषु सत्सु विसृष्टमैथिलः सन् । स्वां पुरीं न्यवर्तत । उद्देशक्रियापेक्षया कर्मत्वं पुर्योः ॥

तस्य जातु मरुतः प्रतीपगा वर्त्मसु ध्वजतरुप्रमाथिनः ।
चिक्लिशुर्भृशतया वरूथिनीमुत्तटा इव नदीरयाः स्थलीम् ॥ ५८ ॥

जातु कदाचित् वर्त्मसु ध्वजा एव तरवस्तान्प्रमथ्नन्ति ये ते ध्वजतरुप्रमाथिनः प्रतीपगाः प्रतिकूलगामिनः मरुतः । उत्तटाः नदीरयाः स्थलीम् अकृत्रिमभूमिम् इव । 'जानपदकुण्ड–' इत्यादिना ङीप् । तस्य वरूथिनीं सेनां भृशतया भृशं चिक्लिशुः क्लिश्यन्ति स्म ॥

लक्ष्यते स्म तदनन्तरं रविर्बद्धभीमपरिवेषमण्डलः ।
वैनतेयशमितस्य भोगिनो भोगवेष्टित इव च्युतो मणिः ॥ ५९ ॥

तदनन्तरं प्रतीपपवनानन्तरं बद्धं भीमं परिवेषस्य परिधेर्मण्डलं यस्य स [ बद्धभीमपरिवेषमण्डलः ]। 'परिवेषस्तु परिधिरुपसूर्यकमण्डले ।' इत्यमरः । रविः वैनतेयशमितस्य गरुडहतस्य भोगिनः सर्पस्य भोगेन कायेन । 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः ।' इत्यमरः । वेष्टितः [ भोगवेष्टितः ] च्युतः शिरोभ्रष्टः मणिः इव । लक्ष्यते स्म ॥

श्येनपक्षपरिधूसरालकाः सांध्यमेघरुधिरार्द्रवाससः ।
अङ्गना इव रजस्वला दिशो नो बभूवुरवलोकनक्षमाः ॥ ६० ॥

[ श्येनपक्षपरिधूसरालकाः ] श्येनपक्षा एव परिधूसरा अलका यासां तास्तथोक्ताः । सांध्यमेघा एव रुधिरार्द्राणि वासांसि यासां तास्तथोक्ताः [ सांध्यमेघरुधिरार्द्रवाससः ] । रजो धूलिरासामस्तीति रजस्वलाः । 'रजःकृष्यासुतिपरिषदो वलच्' इति वलच्प्रत्ययः । दिशः । रजस्वला ऋतुमत्यः अङ्गनाः इव । 'स्याद्रजः पुष्पमार्तवम्' इत्यमरः । अवलोकनक्षमाः दर्शनार्हाः नो बभूवुः । एकत्रादृष्टदोषादपरत्र शास्त्रदोषादिति विज्ञेयम् । अत्र रजोवृष्टिरुत्पात उक्तः ॥

भास्करश्च दिशमध्युवास यां तां श्रिताः प्रतिभयं ववासिरे ।
क्षत्रशोणितपितृक्रियोचितं चोदयन्त्य इव भार्गवं शिवाः ॥ ६१ ॥

भास्करः यां दिशम् अध्युवास च यस्यां दिश्युषितः । 'उपान्वध्याङ्वसः' इति

---

१ अयं शिष्टाचारः । एवं सप्तमसर्गेऽपि-'निश्वस्त्रिलोकप्रथितेन' इ०. २ 'वर्त्मनि' इ० ३ 'उद्धताः' इ० च पा०. ४ वेष्टनः. ५ सान्द्र. ६ नोदयन्त्यः, प्रेरयन्त्यः, बोधयन्त्यः इ. पाठा०.

कर्मेलम् । तां दिशं श्रिताः शिवाः गोमायवः । 'स्त्रियां शिवा भूरिमायुगोमायुमृगधूर्तकाः ।' इत्यमरः । क्षत्रशोणितेन या पितृक्रिया पितृतर्पणं तत्रोचितं परिचितं [ क्षत्रशोणितपितृक्रियोचितं ] भार्गवं चोदयन्त्यः इव प्रतिभयं भयंकरं ववासिरे रुरुवुः । 'वासृ शब्दे' इति धातोर्लिट् । 'तिरश्चां वासितं रुतम्' इत्यमरः ॥

तत्प्रतीपपवनादि वैकृतं प्रेक्ष्य शान्तिमधिकृत्य कृत्यवित् ।
अन्वयुङ्क्त गुरुमीश्वरः क्षितेः स्वन्तमित्यलघयत्स तद्व्यथाम् ॥ ६२ ॥

तत् प्रतीपपवनादि वैकृतं दुर्निमित्तं प्रेक्ष्य कृत्यवित् कार्यज्ञः क्षितेः ईश्वरः शान्तिम् अनर्थनिवृत्तिम् अधिकृत्य उद्दिश्य गुरुं वसिष्ठम् अन्वयुङ्क्त अपृच्छत् । 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः । स गुरुः स्वन्तं शुभोदर्कं भावि इति तस्य राज्ञो व्यथां [ तद्व्यथाम् ] अलघयत् लघूकृतवान् ॥

तेजसः सपदि राशिरुत्थितः प्रादुरास किल वाहिनीमुखे ।
यः प्रमृज्य नयनानि सैनिकैर्लक्षणीयपुरुषाकृतिश्चिरात् ॥ ६३ ॥

सपदि उत्थितः तेजसः राशिः वाहिनीमुखे सेनाग्रे प्रादुरास किल खलु । यः सैनिकैः नयनानि प्रमृज्य चिरात् [ लक्षणीयपुरुषाकृतिः ] लक्षणीया भावनीया पुरुषाकृतिर्यस्य स तथोक्तः । अभूदिति शेषः ॥

पित्र्यमंशमुपवीतलक्षणं मातृकं च धनुरूर्जितं दधत् ।
यः ससोम इव घर्मदीधितिः सद्विजिह्व इव चन्दनद्रुमः ॥ ६४ ॥

उपवीतं लक्षणं चिह्नं यस्य तं [ उपवीतलक्षणम् ] । पितुरयं पित्र्यः । 'वाय्वृतुपित्रुषसो यत्' इति यत्प्रत्ययः । तं [ पित्र्यम् ] अंशम् । धनुर्गोर्जितं धनुरूर्जितम् । मातुरयं मातृकः । 'ऋतष्ठञ्' इति ठञ्प्रत्ययः । तं [ मातृकम् ] अंशं च दधद् यः भार्गवः । ससोमः चन्द्रयुक्तः घर्मदीधितिः सूर्यः इव । सद्विजिह्वः सर्पः चन्दनद्रुमः इव स्थितः ॥

येन रोषपरुषात्मनः पितुः शासने स्थितिभिदोऽपि तस्थुषा ।
वेपमानजननीशिरश्छिदा प्रागजीयत घृणा ततो मही ॥ ६५ ॥

रोषेण परुष आत्मा बुद्धिर्यस्य सः । 'आत्मा जीवो धृतिर्बुद्धिः' इत्यमरः । तस्य रोषपरुषात्मनः स्थितिभिदः अपि मर्यादालङ्घिनोऽपि पितुः शासने तस्थुषा

स्थितेन वेपमानजननीशिरश्छिदा येन प्राग् घृणा[1] अजीयत । ततः अनन्तरं मही अजीयत । मातृहन्तुः क्षत्रवधात्कुतो जुगुप्सेति भावः ॥

अक्षबीजवलयेन निर्बभौ दक्षिणश्रवणसंस्थितेन[2] यः ।
क्षत्रियान्तकरणैकविंशतेर्व्याजपूर्वगणनामिवोद्वहन् ॥ ६६ ॥

यः भार्गवो दक्षिणश्रवणे संस्थितेन [ दक्षिणश्रवणसंस्थितेन ] अक्षबीजवलयेन अक्षमालया क्षत्रियान्तकरणानां क्षत्रियवधानामेकविंशतेरेकविंशतिसंख्यायाः [ क्षत्रियान्तकरणैकविंशतेः ] व्याजोऽक्षमालारूपः पूर्वो यस्यास्तां गणनां [ व्याजपूर्वगणनाम् ] उद्वहन् इव निर्बभौ ॥

तं पितुर्वधभवेन मन्युना राजवंशनिधनाय दीक्षितम् ।
बालसूनुरवलोक्य भार्गवं स्वां दशां च विषसाद पार्थिवः ॥ ६७ ॥

पितुः जमदग्नेः वधभवेन क्षत्रियकर्तृकवधोद्भवेन मन्युना कोपेन [ राजवंशनिधनाय ] राजवंशानां निधनाय नाशार्थम् । 'निधनं स्यात्कुले नाशे' इति विश्वः । दीक्षितम् । प्रवृत्तमित्यर्थः । तं भार्गवं स्वां दशां च अवलोक्य बालाः सूनवो यस्य स [ बालसूनुः ] पार्थिवः विषसाद । स्वस्यातिदौर्बल्याच्छत्रोश्चातिक्रोधात्कांदिशीकोऽभवदित्यर्थः ॥

नाम राम इति तुल्यमात्मजे वर्तमानमहिते च दारुणे ।
हृद्यमस्य भयदायि चाभवद्रत्नजातमिव हारसर्पयोः ॥ ६८ ॥

आत्मजे पुत्रे दारुणे घोरे अहिते शत्रौ च तुल्यम् अविशेषेण वर्तमानं राम इति नाम । हारसर्पयोः वर्तमानं रत्नजातं रत्नजातिः इव । अस्य दशरथस्य हृद्यं हृदयंगमं भयदायि भयंकरं च अभवत् ॥

अर्घ्यमर्घ्यमिति वादिनं नृपं सोऽनवेक्ष्य भरताग्रजो यतः ।
क्षत्रकोपदहनार्चिषं ततः संदधे दृशमुदग्रतारकाम्[6] ॥ ६९ ॥

स भार्गवः । अर्घ्यम् अर्घ्यम् इति वादिनं नृपम् अनवेक्ष्य यतः यत्र भरताग्रजः ततः तत्र । 'इतराभ्योऽपि दृश्यन्ते' इति सार्वविभक्तिकस्तसिः । क्षत्रे क्षत्रकुले विषये यः कोपदहनो रोषाग्निस्तस्यार्चिषं ज्वालामिव स्थितां [ क्षत्रकोपदहनार्चिषं ]। 'ज्वालाभासोर्नपुंस्यर्चिः' इत्यमरः । उदग्रा तारका कनीनिका यस्यास्ताम् [ उदग्रतारकाम् ]। 'तारकाऽक्ष्णः कनीनिका' इत्यमरः । दृशं संदधे ॥

तेन कार्मुकनिषक्तमुष्टिना राघवो विगतभीः पुरोगतः ।
अङ्गुलीविवरचारिणं शरं कुर्वता निजगदे युयुत्सुना ॥ ७० ॥

---

१ घृणा दया कार्याकार्यविचारशीलता वा । २ संश्रयेण. ३ तथा च भारते—एवमुच्चावचैरस्त्रैर्भार्गवेण महात्मना । त्रिःसप्तकृत्वः पृथिवी कृता निःक्षत्रिया पुरा ॥ ४ विव्यथे दशरथो दशाच्युतः. ५ ०वंश. ६ तारकम्. ७ निषक्त, नियुक्त. ८ सारिणं, वर्तिनम् इ. पा० ।

कार्मुकनिषक्तमुष्टिना । शरं अङ्गुलीविवरचारिणं कुर्वता । योद्धुमिच्छता युयुत्सुना । तेन भार्गवेण । कर्त्रा । विगतभीः निर्भीकः सन् । पुरोगतः अग्रगतः राघवो निजगदे उक्तः । कर्मणि लिट् ॥

क्षत्रजातमपकारवैरि[1] मे तन्निहत्य बहुशः शमं गतः ।
सुप्तसर्प इव दण्डघट्टनाद्रोषितो[2]ऽस्मि तव विक्रम[3]श्रवात् ॥ ७१ ॥

क्षत्रजातं क्षत्रजातिः । मे [ अपकारवैरि ] अपकारेण पितृवधरूपेण वैरि द्वेषि । तत् क्षत्रजातं बहुशः एकविंशतिवारान् निहत्य शमं गतः अस्मि । तथापि सुप्तसर्पः दण्डघट्टनाद् इव तव विक्रमस्य श्रवात् आकर्णनात् [ विक्रमश्रवात् ] रोषितः रोषं प्रापितः अस्मि ॥

मैथिलस्य धनुरन्यपार्थिवैस्त्वं किलानमितपूर्वमक्षणोः ।
तन्निशम्य भवता समर्थये वीर्यशृङ्ग[4]मिव भग्नमात्मनः ॥ ७२ ॥

अन्यैः पार्थिवैः [ अन्यपार्थिवैः ] । अनमितपूर्वं पूर्वमनामितम् । सुप्सुपेति समासः । अस्य मैथिलस्य धनुः त्वम् अक्षणोः क्षतवान् । किल इति वार्तायाम् । 'वार्तासंभाव्ययोः किल' इत्यमरः । तद् धनुर्भङ्गं निशम्य आकर्ण्य भवता आत्मनः मम वीर्यमेव शृङ्गं [ वीर्यशृङ्गम् ] भग्नम् इव समर्थये मन्ये ॥

अन्यदा जगति राम इत्ययं शब्द उच्चरित एव मामगात् ।
व्रीडमावहति मे स संप्रति व्यस्तवृत्तिरुदयोन्मुखे त्वयि ॥ ७३ ॥

अन्यदा अन्यस्मिन्काले जगति राम इति अयं शब्दः उच्चरितः सन् माम् एव अगात् । संप्रति त्वयि उदयोन्मुखे सति व्यस्तवृत्तिः विपरीतवृत्तिः । अन्यागामीति यावत् । स शब्दः मे व्रीडम् आवहति लज्जां करोति ॥

बिभ्रतोऽस्त्रमचलेऽप्यकुण्ठितं द्वौ रिपू मम मतौ समागसौ ।
धेनुवत्स[5]हरणाच्च हैहयस्त्वं च कीर्तिमपहर्तुमुद्यतः ॥ ७४ ॥

अचले क्रौञ्चाद्रौ अपि अकुण्ठितम् अस्त्रं बिभ्रतः मम द्वौ समागसौ तुल्यापराधौ रिपू मतौ । धेनोः पितृहोमधेनोर्वत्सस्य हरणाद्धेतोः [ धेनुवत्सहरणात् ] हैहयः कार्तवीर्यः च कीर्तिम् अपहर्तुम् उद्यतः उद्युक्तः त्वं च । वत्सहरणे भारतश्लोकः— 'प्रमथ्याश्रमात्तस्य होमधेन्वास्ततो बलात् । जहार वत्सं क्रोशन्त्या बभञ्ज च महाद्रुमान् ॥' इति ॥

क्षत्रियान्तकरणोऽपि विक्रमस्तेन मामवति नाजिते त्वयि ।
पावकस्य महिमा स गण्यते कक्षवज्ज्वलति सागरेऽपि यः ॥ ७५ ॥

---

१ 'अपकारि वैरि' इ. २ रोषितः-उत्थितः, उद्यतः, इ० पा०. ३ धामविभवात्.
४ [illegible] । इ० [illegible] ॥
५ 'वत्स हेमधेनुहरणात्' इ० पा०.

तेन कारणेन । क्रियते येनासौ करणः । क्षत्रियान्तस्य करणः [ क्षत्रियान्तकरणः ] अपि विक्रमः । त्वयि अजिते मां न अवति न प्रीणाति । तथा हि । पावकस्य अग्नेः महिमा स गण्यते यः कक्षवत् कक्ष इव । 'तत्र तस्येव' इति सप्तम्यर्थे वतिः । सागरे अपि ज्वलति ॥

विद्धि चात्तबलमोजसा हरेरैश्वरं धनुरभाजि यत्त्वया ।
खातमूलमनिलो नदीरयैः पातयत्यपि मृदुस्तटद्रुमम् ॥ ७६ ॥

किं च ऐश्वरं धनुः हरेः विष्णोः ओजसा बलेन आत्तबलं हृतसारं च विद्धि । यद् धनुः त्वया अभाजि अभञ्जि । 'भञ्जेश्च चिणि' इति विभाषया नलोपः । तथा हि । नदीरयैः खातमूलम् अवदारितपादं तटद्रुमं मृदुः अपि अनिलः पातयति । ततः शिशुरपि रौद्रं धनुरभाङ्क्षमिति मा गर्वीरिति भावः ॥

तन्मदीयमिदमायुधं ज्यया संगमय्य सशरं विकृष्यताम् ।
तिष्ठतु प्रधनमेवमप्यहं तुल्यबाहुतरसा जितस्त्वया ॥ ७७ ॥

तत् तस्मात् मदीयम् इदम् आयुधं कार्मुकं ज्यया संगमय्य संयोज्य । 'ल्यपि लघुपूर्वात्' इति णेरयादेशः । सशरं यथा तथा त्वया विकृष्यताम् । प्रधनं रणः तिष्ठतु । प्रधनं तावदास्तामित्यर्थः । 'प्रधनं मारणे रणे' इति विश्वः । एवम् अपि मद्धनुःकर्षणेऽपि अहं तुल्यबाहुतरसा समबाहुबलेन । 'तरसी बलरंहसी' इत्यमरः । त्वया जितः ॥

कातरोऽसि यदि वोद्गतार्चिषा तर्जितः परशुधारया मम ।
ज्यानिघातकठिनाङ्गुलिर्वृथा बध्यतामभययाचनाञ्जलिः ॥ ७८ ॥

यदि वा उद्गतार्चिषा उद्गतज्वालया मम परशुधारया तर्जितः कातरः असि भीतोऽसि चेत् । वृथा [ ज्यानिघातकठिनाङ्गुलिः ] ज्यानिघातेन कठिना अङ्गुल्यो यस्य स तथोक्तः अभययाचनाञ्जलिः अभयप्रार्थनाञ्जलिः बध्यताम् । 'तौ युतावञ्जलिः पुमान्' इत्यमरः ॥

एवमुक्तवति भीमदर्शने भार्गवे स्मितविकम्पिताधरः ।
तद्धनुर्ग्रहणमेव राघवः प्रत्यपद्यत समर्थमुत्तरम् ॥ ७९ ॥

भीमदर्शने भार्गवे एवम् उक्तवति सति । राघवः स्मितेन हासेन विकम्पि-

१ 'रसम्' इ० पा०. २ पुरा किल विश्वकर्मा अप्रतिमवीर्ये द्वे धनुषी निर्मायैकं विष्णवे एकं शिवाय ददौ । ततोनयोः को बलवत्तर इति देवैः पृष्टो ब्रह्मा तयोः कलहं जनयामास । एवं हरि-हरयोः प्रवृत्ते युद्धे भगवान् विष्णुः शिवधनुर्निर्वीर्यं कृतवान् शिवं च स्तम्भयामास इ. रामायणम् । ३ तन्मदीयमिदमाततज्यतां नीयतां विजयसाधनं धनुः । इ. पा०. ४ '०विमर्द' इ. पा०.

ताधरः [ स्मितविकम्पिताधरः ] सन् । तद्धनुर्ग्रहणम् एव समर्थम् उचितम् उत्तरं प्रत्यपद्यत अङ्गीचकार ॥

पूर्वजन्मधनुषा समागतः सोऽतिमात्रलघुदर्शनोऽभवत् ।
केवलोऽपि सुभगो नवाम्बुदः किं पुनस्त्रिदशचापलाञ्छितः ॥ ८० ॥

पूर्वजन्मनि नारायणावतारे यद्धनुस्तेन [ पूर्वजन्मधनुषा ] समागतः संगतः स रामोऽतिमात्रमत्यन्तं लघुदर्शनः प्रियदर्शनः [ अतिमात्रलघुदर्शनः ] अभवत् । तथा हि नवाम्बुदः केवलः रिक्तः अपि सुभगः । त्रिदशचापेनेन्द्रधनुषा लाञ्छिताश्चिह्नितः [ त्रिदशचापलाञ्छितः ] किं पुनः । सुभग एवेति भावः ॥

तेन भूमिनिहितैककोटि तत्कार्मुकं च बलिनाऽधिरोपितम् ।
निष्प्रभश्च रिपुरास भूभृतां धूमशेष इव धूमकेतनः ॥ ८१ ॥

बलिना तेन रामेण भूमिनिहितैका कोटिर्यस्य तत् [ भूमिनिहितैककोटि ] कर्मणे प्रभवतीति कार्मुकं धनुः च । 'कर्मण उकञ्' इत्युकञ्प्रत्ययः । अधिरोपितम् । भूभृतां रिपुः भार्गवः च । धूमशेषः धूमकेतनः अग्निः इव । निष्प्रभः निस्तेजस्कः आस बभूव । आसेति तिङन्तप्रतिरूपकमव्ययं दीप्त्यर्थकस्यास्ते रूपं वा ॥

तावुभावपि परस्परस्थितौ वर्धमानपरिहीनतेजसौ ।
पश्यति स्म जनता दिनात्यये पार्वणौ शशिदिवाकराविव ॥ ८२ ॥

परस्परस्थितौ अन्योन्याभिमुखौ । [ वर्धमानपरिहीनतेजसौ ] वर्धमानं च परिहीनं चेति द्वन्द्वः । वर्धमानपरिहीने तेजसी ययोः तौ उभौ राघवभार्गवौ अपि । दिनात्यये सायंकाले पर्वणि भवौ पार्वणौ शशिदिवाकरौ इव । जनता जनसमूहः । 'ग्रामजनबन्धुसहायेभ्यस्तल्' इति तल्प्रत्ययः । पश्यति स्म अपश्यत् । अत्र राघवस्य शशिना भार्गवस्य भानुनौपम्यं द्रष्टव्यम् ॥

तं कृपामृदुरवेक्ष्य भार्गवं राघवः स्खलितवीर्यमात्मनि ।
स्वं च संहितममोघमाशुगं व्याजहार हरसूनुसंनिभः ॥ ८३ ॥

हरसूनुसंनिभः स्कन्दसमः कृपामृदुः राघवः । आत्मनि विषये स्खलितवीर्यं प्रतिहतशक्तिं तं भार्गवं स्वं स्वकीयं संहितम् अमोघम् आशुगं बाणं च अवेक्ष्य व्याजहार बभाषे ॥

१ 'नीचो वदति न कुरुते न वदति सुजनः करोत्येव' इति भावः । २ 'नभ' इ. पा० ३ ०[illegible] . ४ उभयोरपि विष्णुस्वरूपत्वात्पूर्वजन्म परशुरामस्य तस्य धनुषा इ. टि०. ५ 'लघुगुरो च [illegible]' इ. मेदिनी । ६ ०कोटिना, निहते०. ७ 'भास पर्वणिहतिं च भार्गवो [illegible]' इ. पा० ८ तावुभौ, ९ ०स्थौ, १० अनुरूपः श्लो० शाकुन्तले-यात्येकतोऽस्तशिखरं पतिरोषधीनामाविष्कृतोऽरुणपुरःसर एकतोऽर्कः । तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां लोको नियम्यत इवैष दशान्तरेषु ॥ इति । ११ 'अवक्ष्य' इ. पा०

न प्रहर्तुमलमस्मि निर्दयं विप्र इत्यभिभवत्यपि त्वयि ।
शंस किं गतिमनेन पत्रिणा हन्मि लोकमुत ते मखार्जितम् ॥ ८४ ॥

अभिभवति अपि त्वयि । विप्रः इति हेतोः । निर्दयं प्रहर्तुम् अलं शक्तः न अस्मि । किं तु अनेन पत्रिणा शरेण ते गतिं गमनं हन्मि । उत मखार्जितं लोकं स्वर्गं हन्मि शंस ब्रूहि ॥

प्रत्युवाच तमृषिर्न तत्त्वतस्त्वां न वेद्मि पुरुषं पुरातनम् ।
गां गतस्य तव धाम वैष्णवं कोपितो ह्यसि मया दिदृक्षुणा ॥ ८५ ॥

ऋषिः भार्गवः तं रामं प्रत्युवाच । किमिति । तत्त्वतः स्वरूपतः त्वां पुरातनं पुरुषं न वेद्मि इति न । किं तु वेद्म्येवेत्यर्थः । किं तु गां गतस्य भुवमवतीर्णस्य तव वैष्णवं धाम तेजः दिदृक्षुणा द्रष्टुमिच्छुना मया कोपितः हि असि ॥

भस्मसात्कृतवतः पितृद्विषः पात्रसाच्च वसुधां ससागराम् ।
आहितो जयविपर्ययोऽपि मे श्लाघ्य एव परमेष्ठिना त्वया ॥ ८६ ॥

पितृद्विषः पितृवैरिणः भस्मसात्कृतवतः कोपेन भस्मीकुर्वतः । 'विभाषा साति कार्त्स्न्ये' इति सातिप्रत्ययः । ससागरां वसुधां च पात्रसात् पात्राधीनं देयं कृतवतः । 'देये त्रा च' इति चकारात्सातिः । कृतकृत्यस्य मे परमेष्ठिना परमपुरुषेण त्वया आहितः कृतः जयविपर्ययः पराजयः अपि श्लाघ्यः आश्लाघ्य एव ॥

तद्गतिं मतिमतां वरेप्सितां पुण्यतीर्थगमनाय रक्ष मे ।
पीडयिष्यति न मां खिलीकृता स्वर्गपद्धतिरभोगलोलुपम् ॥ ८७ ॥

तत् तस्मात्कारणात् हे मतिमतां वर पुण्यतीर्थगमनाय आप्लुमिच्छाम् ईप्सितां मे गतिं रक्ष पालय । किं तु खिलीकृता दुर्गमीकृतापि स्वर्गपद्धतिः अभोगलोलुपं भोगनिःस्पृहं मां न पीडयिष्यति । अतस्तामेव जहीत्यर्थः ॥

प्रत्यपद्यत तथेति राघवः प्राङ्मुखश्च विससर्ज सायकम् ।
भार्गवस्य सुकृतोऽपि सोऽभवत्स्वर्गमार्गपरिघो दुरत्ययः ॥ ८८ ॥

राघवः तथा इति प्रत्यपद्यत अङ्गीकृतवान् । प्राङ्मुखः इन्द्रदिङ्मुखः सायकं विससर्ज च । स सायकः सुकृतः अपि साधुकारिणोऽपि । करोतेः क्विप् । भार्गवस्य दुरत्ययः दुरतिक्रमः स्वर्गमार्गस्य परिघः प्रतिबन्धः [ स्वर्गमार्गपरिघः ] अभवत् ॥

---

१ अत्र रामायणम्—ब्राह्मणोऽसीति पूज्यो मे विश्वामित्रकृतेन [ विश्वामित्रभगिन्याः पौत्रत्वेन ] च । तस्माच्छक्तो न ते राम मोक्तुं प्राणहरं शरम् ॥ इमां वा त्वद्गतिं राम तपोबलसमर्जितान् । लोकानप्रतिमान् वापि हनिष्यामीति मे मतिः ॥ न ह्ययं वैष्णवो दिव्यः शरः परपुरंजयः । मोघः पतति वीर्येण बलदर्पविनाशनः । २ विप्र० इ. पा० ३ कारयतेत्यर्थः । तदुक्तं हरिवंशे—'त्रिःसप्तकृत्वः पृथिवी तेन निःक्षत्रिया कृता । कृत्वा निःक्षत्रियां चैव भार्गवः सुमहाबलः । सर्वपापविनाशाय वाजिमेधेन चेष्टवान् ॥ तस्मिन्यज्ञे महादाने दक्षिणां भृगुनन्दनः । मारीचाय ददौ प्रीतः कश्यपाय वसुंधराम् ॥ ४ 'प्राङ्मुखम्' इ. पा० ५ सुकृतस्य.

राघवोऽपि चरणौ तपोनिधेः क्षम्यतामिति वदन्समस्पृशत् ।
निर्जितेषु तरसा तरस्विनां शत्रुषु प्रणतिरेव कीर्तये[2] ॥ ८९ ॥

राघवः अपि क्षम्यताम् इति वदन् तपोनिधेः भार्गवस्य चरणौ समस्पृशत् प्रणनाम । तथा हि । तरस्विनां बलवतां तरसा बलेन निर्जितेषु शत्रुषु प्रणतिः एव कीर्तये । भवतीति शेषः ॥

राजसत्वमवधूय मातृकं पि[3]त्र्यमस्मि गमितः शमं यदा[4] ।
नन्वनिन्दितफलो मम त्वया निग्रहोऽप्ययमनुग्रहीकृतः[5] ॥ ९० ॥

मातुरागतं मातृकं राजसत्वं रजोगुणप्रधानत्वम् अवधूय पितुरागतं पित्र्यं शमं यदा गमितोऽस्मि । तदा त्वया मम अपेक्षितत्वादनिन्दितमगर्हितं फलं स्वर्गहानिलक्षणं यस्य सः [ अनिन्दितफलः ] अयं निग्रहः अपकारः अपि अनुग्रहीकृतः ननु उपकारीकृतः खलु ॥

साधयाम्य[7]हमविघ्नमस्तु ते देवकार्य[6]मुपपादयिष्यतः ।
ऊचिवानिति वचः सलक्ष्मणं लक्ष्मणाग्रजमृषिस्तिरोदधे[8] ॥ ९१ ॥

अहं साधयामि गच्छामि । देवकार्यमुपपादयिष्यतः संपादयिष्यतः ते अविघ्नं अस्तु विघ्नाभावोऽस्तु । '*अव्ययं विभक्ति—*' इत्यादिनार्थाभावेऽव्ययीभावः । सह लक्ष्मणेन सलक्ष्मणः । तं [ सलक्ष्मणं ] । 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः । लक्ष्मणाग्रजं रामम् इति वचः ऊचिवान् उक्तवान् । ब्रूञः क्वसुः । ऋषिः तिरोदधे अन्तर्दधे ॥

तस्मिन्गते विजयिनं परिरभ्य रामं
स्नेहादमन्यत पिता पुनरेव जातम् ।
तस्याभवत्क्षणशुचः परितोपलाभः
कक्षाग्निलङ्घिततरोरिव वृष्टिपातः ॥ ९२ ॥

तस्मिन् *भार्गवे गते सति* । विजयिनं रामं पिता स्नेहात्परिरभ्य आलिङ्ग्य पुनर्जातम् एव अमन्यत । क्षणं शुग्यस्येति विग्रहः । क्षणशुचः तस्य दशरथस्य परितोपलाभः संतोषप्राप्तिः । कक्षाग्निना दावानलेन । 'कक्षः शुष्ककाननवीरुधोः' इति विश्वः । लङ्घितस्याभिहतस्य तरोः [ कक्षाग्निलङ्घिततरोः ] वृष्टिपातः इव । अभवत् ॥

अथ पथि गमयित्वा कृप्तरम्योपकार्ये
कतिचिदवनिपालः शर्वरीः शर्वकल्पः ।

१ अथ. २ शोभते. ३ पैत्र्यं, शमं–पर्ङ. ४ 'यत.' इ. पा. ५ अनुग्रहः कृतः इ० पा०. ६ कामक्रोधादिरिपुबाधकत्वम् । क्षत्रियोचिततेजः प्रभावादिगुणो वा । ७ शाधि, 'साधु यामि' इ. पा०. ८ अस्मात्परमिदं पद्यं क्वचित्—*स्वं निवेश्य किल धाम राघवे वैष्णवं विदितविष्णुतेजसि । स्वस्तिदानमधिकृत्य चाशयं भार्गवोऽथ निजमाश्रमं ययौ ॥*

पुरमविशदयोध्यां मैथिलीदर्शनीनां
कुवलयितगवाक्षां लोचनैरङ्गनानाम् ॥ ९३ ॥

अथ । ईषदसमाप्तः शर्वः **शर्वकल्पः** । 'ईषदसमाप्तौ–' इति कल्पप्प्रत्ययः । **अवनिपालः** । क्लृप्ता रम्या नवा उपकार्या यस्मिन्स तस्मिन् [ **क्लृप्तरम्योपकार्ये** ] **पथि कतिचित् शर्वरीः** रात्रीः **गमयित्वा मैथिलीदर्शनीनाम् अङ्गनानां लोचनैः** । कुवलयानि येषां संजातानि कुवलयिताः । 'तदस्य संजातं तारकादिभ्य इतच्' इतीतच्प्रत्ययः । कुवलयिता गवाक्षा यस्यास्तां [ **कुवलयितगवाक्षां** ] **पुरम् अयोध्याम् अविशत्** प्रविष्टवान् ॥

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीवनीसमाख्यया
व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये
**सीताविवाहवर्णनः** नामैकादशः सर्गः ।

---

## द्वादशः सर्गः ।

वन्दामहे महोद्दण्डदोर्दण्डौ रघुनन्दनौ ।
तेजोनिर्जितमार्तण्डमण्डलौ लोकनन्दनौ ॥

निर्विष्टविषयस्नेहः स दशान्तमुपेयिवान् ।
आसीदासन्ननिर्वाणः प्रदीपार्चिरिवोपासि ॥ १ ॥

[ **निर्विष्टविषयस्नेहः** ] स्नेहयन्ति प्रीणयन्ति पुरुषमिति स्नेहाः । पचाद्यच् । स्निह्यन्ति पुरुषा येष्विति वा स्नेहाः । अधिकरणार्थे घञ् । विषयाः शब्दादयस्त एव स्नेहा निर्विष्टा भुक्ता विषयस्नेहाः येन स तथोक्तः । 'निर्वेशो भृतिभोगयोः' इति विश्वः । दशा जीवनावस्था तस्य अन्तं वार्द्धकम् [ **दशान्तम्** ] **उपेयिवान्स** दशरथः । **उपासि प्रदीपार्चिरिव** दीपज्वालेव । [ **आसन्ननिर्वाणः** ] आसन्नं निर्वाणं मोक्षो यस्य स तथोक्तः **आसीत्** । अर्चिःपक्षे तु विषयो देशः आश्रयः भाजनमिति यावत् । 'विषयः स्यादिन्द्रियार्थे देशे जनपदेऽपि च' इति विश्वः । दशा वर्तिका । 'दशा वर्तावस्थायाम्' इति विश्वः । निर्वाणं विनाशः । 'निर्वाणं निर्वृतौ मोक्षे विनाशे गजमज्जने' इति यादवः ॥

तं कर्णमूलमागत्य रामे श्रीर्न्यस्यतामिति ।
कैकेयीशङ्कयेवाह पलितच्छद्मना जरा ॥ २ ॥

**जरा कैकेयीशङ्कयाइव** पलितस्य केशादिशौक्ल्यस्य छद्मना मिषेण [ **पलितच्छद्मना** ] । 'पलितं जरसा शौक्ल्यं केशादौ' इत्यमरः । **कर्णमूलं** कर्णोपकण्ठम्

---

१ दर्शिनीनां. २ मार्तण्डः सूर्यः । ३ निर्वाणप्रदी०. ४ निर्विष्टः भुक्तः विषयेषु स्त्र्यादिषु स्नेहो रसो येन इति दि०, विषयाणां रूपरसादीनां स्नेहः प्रीतिर्येन इति हे० । चा० सु० द्वयोप्येवम् । श्लिष्टोपमालंकारः इ० चा० सु०. ५ ०जाहं इ. पा० । अत्र चा०—कर्णमूलमिति व्याधिवाचकत्वादसभ्यः पाठः [ अश्लीलत्वाद्दुःपाठः इति दि० ] । कर्णजाहमिति समीचीनः पाठः । तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ इत्यनेन जाहच्प्रत्ययः ।

आगत्य रामे श्रीः राज्यलक्ष्मीः न्यस्यतां निधीयताम् इति तमाह। दशरथो वृद्धोऽहमिति विचार्य रामस्य यौवराज्याभिषेकं चकाङ्क्षेत्यर्थः ॥

सा पौरान्पौरकान्तस्य रामस्याभ्युदयश्रुतिः ।
प्रत्येकं ह्लादयांचक्रे कुल्येवोद्यानपादपान् ॥ ३ ॥

सा पौरकान्तस्य रामस्याभ्युदयश्रुतिः अभिषेकवार्ता । कुल्या कृत्रिमा सरित् । 'कुल्याल्पा कृत्रिमा सरित्' इत्यमरः । उद्यानपादपानिव । पौरान्प्रत्येकं ह्लादयांचक्रे ॥

तस्याभिषेकसंभारं कल्पितं क्रूरनिश्चया ।
दूषयामास[1] कैकेयी शोकोष्णैः पार्थिवाश्रुभिः[2] ॥ ४ ॥

क्रूरनिश्चया कैकेयी तस्य रामस्य कल्पितं संभृतमभिषेकस्य संभारमुपकरणं [अभिषेकसंभारम्] शोकोष्णैः पार्थिवाश्रुभिः दूषयामास । स्ववैमुख्यमूलेन राजशोकेन प्रतिबबन्धेत्यर्थः ॥

सा किलाश्वासिता चण्डी भर्त्रा तत्संश्रुतौ वरौ[3] ।
उद्ववामेन्द्रसिक्ता भूर्बिलमग्नाविवोरगौ ॥ ५ ॥

चण्डी अतिकोपना। 'चण्डस्त्वत्यन्तकोपनः' इत्यमरः। सा किल भर्त्रा आश्वासिता अनुनीता सती [तत्संश्रुतौ] तेन भर्त्रा संश्रुतौ प्रतिज्ञातौ वरौ इन्द्रेण सिक्ताभिवृष्टा [इन्द्रसिक्ता] भूः बिले वल्मीकादौ मग्नौ [बिलमग्नौ] उरगौ इव। उद्ववाम उज्जगार॥

तयोश्चतुर्दशैकेन रामं प्राव्राजयत्समाः ।
द्वितीयेन सुतस्यैच्छद्वैधव्यैकफलां श्रियम् ॥ ६ ॥

सा तयोः वरयोर्मध्ये एकेन वरेण रामं चतुर्दश समाः संवत्सरान् । अत्यन्तसंयोगे द्वितीया । प्राव्राजयत् प्रावासयत् । द्वितीयेन सुतस्य भरतस्य वैधव्यैकफलां स्ववैधव्यमात्रफलाम् । न तूपभोगफलामिति भावः । श्रियम् ऐच्छत् इयेष ॥

पित्रा दत्तां रुदन्रामः प्राङ्महीं प्रत्यपद्यत ।
पश्चाद्वनाय गच्छेति तदाज्ञां[4] मुदितोऽग्रहीत् ॥ ७ ॥

रामः प्राक् पित्रा दत्तां महीं रुदन्प्रत्यपद्यत अङ्गीचकार । स्वत्यागदुःखादिति भावः । पश्चाद्वनाय गच्छ इति एवंरूपां तदाज्ञां पित्राज्ञां मुदितः अग्रहीत् । पित्राज्ञाकरणलाभादिति भावः ॥

---

१ ०यामास इ० पा० २ 'अश्रु-बाष्प-बिन्दुभिः' इ. पा० ३ अत्राध्यात्मरामायणम्—पुरा देवासुरे युद्धे राजा दशरथः स्वयं । इन्द्रेण याचितो धन्वी साहाय्यार्थं महारथः ॥ जगाम सेनया सार्धं त्वया सह शुभानने । युद्धं प्रकुर्वतस्तस्य राक्षसैः सह धन्विनः ॥ तदाक्षकीलो न्यपतच्छिन्नस्तस्य न वेद सः । त्वं तु हस्तं समावेश्य कीलरन्ध्रेऽतिधैर्यतः ॥ स्थितवत्यसितापाङ्गी पतिप्राणपरीप्सया । ततो हत्वासुरान् सर्वान् ददर्श त्वामरिन्दमः । आश्चर्यं परमं लेभे त्वामालिङ्ग्य मुदान्वितः । वृणीष्व यत्ते मनसि वाञ्छितं वरदो ह्यहम् । वरद्वयं वृणीष्व त्वमेवं राजाऽवदत्स्वयम् । त्वयोक्तो वरदो राजन् यदि दत्तं वरद्वयम् । त्वय्येव तिष्ठतु चिरं न्यासभूतं ममानघ । यदा मेऽवसरो भूयात्तदा देहि वरद्वयम् ॥ इति । ४ 'रामप्रव्राजनं वने इ. पा०.

दधतो मङ्गलक्षौमे वसानस्य च वल्कले ।
ददृशुर्विस्मितास्तस्य मुखरा[2]गं समं जनाः ॥ ८ ॥

मङ्गलक्षौमे दधतः वल्कले वसानस्य आच्छादयतः च तस्य रामस्य समम् एकविधं मुखरागं मुखवर्णं जनाः विस्मिताः ददृशुः । सुखदुःखयोरविकृत इति भावः ॥

स सीतालक्ष्मणसखः सत्याद्गुरुमलोपयन् ।
विवेश दण्डकारण्यं प्रत्येकं च सतां मनः ॥ ९ ॥

स रामः गुरुं पितरं सत्याद् वदानरूपाद् अलोपयन् अभ्रंशयन् । [ सीतालक्ष्मणसखः ] सीतालक्ष्मणयोः सखेति विग्रहः । ताभ्यां सहितः सन् दण्डकारण्यं विवेश । सतां मनः च प्रत्येकं विवेश । पितृभक्त्या सर्वे सन्तः संतुष्य इति भावः ॥

राजाऽपि तद्वियोगार्तः स्मृत्वा शापं स्वकर्मजम् ।
शरीरत्यागमात्रेण शुद्धिलाभममन्यत ॥ १० ॥

तद्वियोगार्तः पुत्रवियोगदुःखितः राजा अपि स्वकर्मणा मुनिपुत्रवधरूपेण जातः स्वकर्मजस्तं [ स्वकर्मजं ] शापं पुत्रशोकजमरणात्मकं स्मृत्वा शरीरत्यागमात्रेण देहत्यागेनैव शुद्धिलाभं प्रायश्चित्तम् अमन्यत । मृत इत्यर्थः ॥

विप्रोषितकुमारं तद्राज्यमस्तमितेश्वरम् ।
र[3]न्ध्रान्वेषणदक्षाणां द्विषामामिषतां ययौ ॥ ११ ॥

[ विप्रोषितकुमारं ] विप्रोषिता गताः कुमारा यस्मिंस्तत्तथोक्तम् । [ अस्तमितेश्वरम् ] अस्तमितो मृतः ईश्वरो राजा यस्य तत्तथोक्तं तद्राज्यं रन्ध्रान्वेषणदक्षाणां द्विषाम् आमिषतां भोग्यवस्तुतां ययौ । 'आमिषं भोग्यवस्तुनि' इति केशवः ॥

अथानाथाः प्रकृतयो मातृ[4]बन्धुनिवासिनम् ।
मौ[5]लैरानाययामासुर्भरतं स्तम्भिताश्रुभिः ॥ १२ ॥

अथ अनाथाः प्रकृतयः अमात्याः । 'प्रकृतिः सहजे योनावमात्ये परमात्मनि ।' इति विश्वः । मातृबन्धुषु निवासिनं [ मातृबन्धुनिवासिनम् ] भरतं स्तम्भिताश्रुभिः । पितृमरणगुप्त्यर्थमिति भावः । मौलैः आप्तैः सचिवैः आनाययामासुः आगमयांचक्रुः ॥

श्रुत्वा तथाविधं मृत्युं कैकेयीतनयः पितुः ।
मातुर्न केवलं स्व[6]स्याः श्रियोऽप्यासीत्पराङ्मुखः ॥ १३ ॥

कैकेयीतनयः भरतः पितुः तथाविधं स्वमातृमूलं मृत्युं मरणं श्रुत्वा स्वस्याः मातुः केवल मातुरेव पराङ्मुखो न । किं तु श्रियः अपि पराङ्मुखः आसीत् ॥

---

१ चीरे च परिगृह्णतः. २ ॰गमसमञ्जसम् इ. पा॰ ३ रन्ध्रस्य छिद्रस्य वैगुण्यस्य इति यावत् । अन्वेषणं मार्गणं तस्मिन्दक्षास्तत्परास्तेषाम्. ४ वर्ग, वंश, इ. पा॰. ५ मूले भवैः मौलैः कुलक्रमागतैः अत एव आप्तैः । ६ तस्याः इ. पा. ।

ससैन्यश्चान्वगाद्रामं दर्शितानाश्रमालयैः ।
तस्य पश्यन्ससौमित्रेरुदश्रुर्वसतिद्रुमान् ॥ १४ ॥

ससैन्यः भरतः रामम् अन्वगात् च । किं कुर्वन् । आश्रमालयैः वनवासिभिः दर्शितान् एते रामनिवासा इति कथितान् ससौमित्रेः लक्ष्मणसहितस्य तस्य रामस्य वसतिद्रुमान् निवासवृक्षान् पश्यन् उदश्रुः रुदन् ॥

चित्रकूटवनस्थं च कथितस्वर्गतिर्गुरोः ।
लक्ष्म्या निमन्त्रयांचक्रे तमनुच्छिष्टसंपदा ॥ १५ ॥

चित्रकूटवनस्थं तं रामं च गुरोः पितुः कथितस्वर्गतिः । कथितपितृमरणः सन्नित्यर्थः । अनुच्छिष्टाननुभूतशिष्टा संपद्गुणोत्कर्षो यस्याः । 'संपद्भूतौ गुणोत्कर्षे' इति केशवः । तया [ अनुच्छिष्टसंपदा ] लक्ष्म्या करणेन निमन्त्रयांचक्रे आहूतवान् ॥

स हि प्रथमजे तस्मिन्नकृतश्रीपरिग्रहे ।
परिवेत्तारमात्मानं मेने स्वीकरणाद्भुवः ॥ १६ ॥

स हि भरतः प्रथमजे अग्रजे तस्मिन् रामे अकृतश्रीपरिग्रहे सति स्वयं भुवः स्वीकरणाद् आत्मानं परिवेत्तारं मेने । 'परिवेत्ताऽनुजोऽनूढे ज्येष्ठे दारपरिग्रहात्' इत्यमरः । भूपरिग्रहोऽपि दारपरिग्रहसम इति भावः ॥

तमशक्यमपाक्रष्टुं निर्देशात्स्वर्गिणः पितुः ।
ययाचे पादुके पश्चात्कर्तुं राज्याधिदेवते ॥ १७ ॥

स्वर्गिणः पितुः निदेशाद् अपाक्रष्टुं निवर्तयितुम् अशक्यं तं रामं पश्चाद्राज्याधिदेवते स्वामिन्यौ कर्तुं पादुके ययाचे ॥

स विसृष्टस्तथेत्युक्त्वा भ्रात्रा नैवाविशत्पुरीम् ।
नन्दिग्रामगतस्तस्य राज्यं न्यासमिवाभुनक् ॥ १८ ॥

स भरतः भ्रात्रा रामेण तथा इति उक्त्वा विसृष्टः सन् पुरीम् अयोध्यां नाविशदेव । किं तु नन्दिग्रामगतः सन् तस्य रामस्य राज्यं न्यासम् इव निक्षेपमिव अभुनक् अपालयत् । न तूपभुक्तवानित्यर्थः । अन्यथा 'भुजोऽनवने' इत्यात्मनेपदप्रसङ्गात् । भुजेर्लङ् ॥

दृढभक्तिरिति ज्येष्ठे राज्यतृष्णापराङ्मुखः ।
मातुः पापस्य भरतः प्रायश्चित्तमिवाकरोत् ॥ १९ ॥

ज्येष्ठे दृढभक्तिः राज्यतृष्णापराङ्मुखः भरतः इति पूर्वोक्तानुष्ठानेन मातुः

---

१ 'दर्शिताम्' इ. पा. २ "चित्रकूटाश्रमस्थं, 'चित्रकूटस्थितं रामम्' इ. पा. ३ गतिं गुरोः'—पितुः इ. पा. ४ अनुभूत इ. पा. ५ उक्तमेतत्पर्यायविवेचनप्रसङ्गे—' ऋतुमती हि कन्याः कामयन्ते' इति । अत्र हेमाद्रिः—दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते । परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥ परिवेत्ता परिवित्तिश्च नरकौ पतिताविति । इत्थं वेत्ता न कुरुते यत्नं नैव निपतत ॥ इति । ६ निर्दे०, अपा० इ० पा० ७ इत्थं इ. पा. ८ राज्यपदं इ. पा.

**पापस्य प्रायश्चित्तं** तदपनोदकं कर्म **अकरोम् इव** । इत्युत्प्रेक्षा । दृढभक्तिरित्यत्र दृढशब्दस्य ' स्त्रियाः पुंवत्–' इत्यादिना पुंवद्भावो दुर्घटः । 'अप्रियादिषु' इति निषेधात् । भक्तिशब्दस्य प्रियादिषु पाठात् । अतो दृढं भक्तिरस्येति नपुंसकपूर्वपदो बहुव्रीहिरिति गणव्याख्याने दृढभक्तिरित्येवमादिषु पूर्वपदस्य नपुंसकस्य विवक्षितत्वात्सिद्धमिति समाधेयम् । वृत्तिकारस्य–दीर्घनिवृत्तिमात्रपरो दृढभक्तिशब्दः लिङ्गविशेषस्यानुपकारत्वात्स्त्रीत्वमविवक्षितमेव । तस्मादस्त्रीलिङ्गत्वात् दृढभक्तिशब्दस्यायं प्रयोग इत्यभिप्रायः । न्यासकारोऽप्येवम् । भोजराजस्तु—कर्मसाधनस्यैव भक्तिशब्दस्य प्रियादिपाठाद्भवानीभक्तिरित्यादौ कर्मसाधनत्वात्पुंवद्भावप्रतिषेधः । दृढभक्तिरित्यादौ भावसाधनत्वात्पुंवद्भावसिद्धिः पूर्वपदस्येत्याह ॥

रामोऽपि सह वैदेह्या वने वन्येन वर्तयन् ।
चचार सानुजः शान्तो वृद्धेक्ष्वाकुव्रतं युवा ॥ २० ॥

**सानुजः शान्तः रामः अपि वैदेह्या सह वने वन्येन** वनभवेन कन्दमूलादिना **वर्तयन्** वृत्तिं कुर्वन्वृद्धानामिक्ष्वाकूणां व्रतं वनवासात्मकं **[ वृद्धेक्ष्वाकुव्रतं ] युवा** यौवनस्थ **एव चचार** ॥

प्रभावस्तम्भितच्छायमाश्रितः स वनस्पतिम् ।
कदाचिदङ्के सीतायाः शिश्ये किंचिदिव श्रमात् ॥ २१ ॥

**स रामः कदाचित्** प्रभावेण स्वमहिम्ना स्तम्भिता स्थिरीकृता छाया यस्य तं **[ प्रभावस्तम्भितच्छायं ] वनस्पतिम् आश्रितः** सन् । **किंचिद्** ईषत् **श्रमाद् इव सीतायाः अङ्के शिश्ये** सुष्वाप ॥

ऐन्द्रिः किल नखैस्तस्या विददार स्तनौ द्विजः ।
प्रियोपभोगचिह्नेषु पौरोभाग्यमिवाचरन्[3] ॥ २२ ॥

**ऐन्द्रिः** इन्द्रस्य पुत्रो **द्विजः** पक्षी काकः **तस्याः** सीतायाः **स्तनौ** । प्रियस्य रामस्योपभोगचिह्नेषु **[ प्रियोपभोगचिह्नेषु ]** । तत्कृतनखक्षतेष्वित्यर्थः । पुरोभागिनो दोषैकदर्शिनः कर्म **पौरोभाग्यम्** । ' दोषैकदृक्पुरोभागी ' इत्यमरः । दुःश्लिष्टदोषघातम् **आचरन्** कुर्वन् **इव नखैः विददार** विलिलेख । **किल** इत्यैतिह्ये ॥

तस्मिन्नास्थदिषीकास्त्रं रामो रामावबोधितः ।
आत्मानं मुमुचे तस्मादेकनेत्रव्ययेन सः ॥ २३ ॥

रामया सीतयावबोधितः **[ रामावबोधितः ] रामः तस्मिन्** काके **इषीकास्त्रं** काशास्त्रम् । ' इषीका काशमुच्यते ' इति हलायुधः । **आस्थद्** अस्यति स्म । ' असु क्षेपणे ' इति धातोर्लुङ् । ' अस्यतिवक्तिख्यातिभ्योऽङ् ' इत्यङ्प्रत्ययः । ' अस्य-

---

१ मयो नाम नरः मोर्के चिनं निषद उच्यते । नगोनिअसंयोगात्मावञ्चिनमिनीरिते ॥
२ ' ध्वनिम् ' इ. पा. ३ 'आचरत्' इ. पा० । अस्य श्लोकस्य स्थाने केचिदिमं श्लोकं पठन्ति–
मृगमर्म ततः सीतां रसन्तीमन्तरे धृतं [ शठः ] । पक्षुन्नतनखानैर्बबाधे वायसो बठत् ॥
४ ' श्रान्तः स, श्रान्तस्तु–सन् ' इ. पा०

-तेस्सुक्' इति धुगागमः। स काक एकनेत्रस्य व्ययन दानेन [ एकनेत्रव्ययेन ] तस्माद् अस्त्रात् आत्मानं मुमुचे मुक्तवान्। मुचेः कर्तरि लिट्। 'धेनुं मुमोच' ( २।१ ) इतिवत्प्रयोगः॥

रामस्त्वासन्नदेशत्वाद्भरतागमनं पुनः।
आशङ्क्योत्सुकसारङ्गां चित्रकूटस्थलीं जहौ॥ २४॥

रामः तु आसन्नदेशत्वाद् हेतोः पुनः भरतागमनम् आशङ्क्य उत्सुकसारङ्गाम् उत्कण्ठितहरिणां चित्रकूटस्थलीं जहौ तत्याज। आसन्नश्चासौ देशश्चेति विग्रहः॥

प्रययावातिथेयेषु वसन्नृषिकुलेषु सः।
दक्षिणां दिशमृक्षेषु वार्षिकेष्विव भास्करः॥ २५॥

स रामः। अतिथिषु साधून्यातिथेयानि। 'पथ्यतिथिवसतिस्वपतेर्ढञ्' इति ढञ्प्रत्ययः। तेषु [ आतिथेयेषु ] ऋषिकुलेषु ऋष्याश्रमेषु। 'कुलं कुल्ये गणे देहे गेहे जनपदेऽन्वये।' इति हैमः। वर्षासु भवानि वार्षिकाणि। 'वर्षाभ्यष्ठक्' इति ठक्प्रत्ययः। तेषु [ वार्षिकेषु ] ऋक्षेषु नक्षत्रेषु राशिषु वा भास्करः इव। वसन् दक्षिणां दिशं प्रययौ॥

बभौ तमनुगच्छन्ती विदेहाधिपतेः सुता।
प्रतिषिद्धाऽपि कैकेय्या लक्ष्मीरिव गुणोन्मुखी॥ २६॥

तं रामं अनुगच्छन्ती विदेहाधिपतेः सुता सीता कैकेय्या प्रतिषिद्धा निवारिता अपि गुणोन्मुखी गुणोत्सुका लक्ष्मीः राजलक्ष्मीः इव बभौ॥

अनुसूयातिसृष्टेन पुण्यगन्धेन काननम्।
सा चकाराङ्गरागेण पुष्पोच्चलितषट्पदम्॥ २७॥

सा सीतानुसूययात्रिभार्ययातिसृष्टेन दत्तेन [ अनुसूयातिसृष्टेन ] पुण्यगन्धेन अङ्गरागेण काननं वनं [ पुष्पोच्चलितषट्पदं ] पुष्पेभ्य उच्चलिता निर्गताः षट्पदा यस्मिंस्तत्तथाभूतं चकार॥

संध्याभ्रकपिशस्तस्य विराधो नाम राक्षसः।
अतिष्ठन्मार्गमावृत्य रामस्येन्दोरिव ग्रहः॥ २८॥

संध्याभ्रकपिशः विराधः नाम राक्षसः। ग्रहः राहुः इन्दोः इव। तस्य रामस्य मार्गम् अध्वानम् आवृत्य अवरुध्य अतिष्ठत्॥

स जहार तयोर्मध्ये मैथिलीं लोकशोषणः।
नभोनभस्ययोर्वृष्टिमवग्रह इवान्तरे॥ २९॥

लोकस्य शोषणः शोषकः [ लोकशोषणः ] स राक्षसः तयोः रामलक्ष्मणयोः

---

१ अपि च मन्मुखी गुणाम् इ. पा. २ अन. 'विसृष्टेन' इ. पा. ३ 'पुष्पित, प्रसिर' इ. पा. ४ कपिश. ५ 'मत्र' इ. पा. ६ सेत्र. ७ मध्यात्. ८ मोर.

मध्ये मैथिलीम् । नभोनभस्ययोः श्रावणभाद्रपदयोः अन्तरे मध्ये वृष्टिम् अवग्रहः वर्षप्रतिबन्धः इव । जहार । 'वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ' इत्यमरः ॥

तं विनिष्पिष्य काकुत्स्थौ पुरा दूषयति स्थलीम् ।
गन्धेनाशुचिना चेति वसुधायां निचख्नतुः ॥ ३० ॥

ककुत्स्थस्य गोत्रापत्ये पुमांसौ काकुत्स्थौ रामलक्ष्मणौ तं विराधं विनिष्पिष्य हत्वा । अशुचिना अपवित्रेण गन्धेन स्थलीम् आश्रमभुवं पुरा दूषयति दूषयिष्यति इति हेतोः । 'यावत्पुरानिपातयोर्लट्' इति भविष्यदर्थे लट् । वसुधायां निचख्नतुः भूमौ खनित्वा निक्षिप्तवन्तौ च ॥

पञ्चवट्यां ततो रामः शासनात्कुम्भजन्मनः ।
अनपोढस्थितिस्तस्थौ विन्ध्याद्रिः प्रकृताविव ॥ ३१ ॥

ततः रामः कुम्भजन्मनः अगस्त्यस्य शासनात् । पञ्चानां वटानां समाहारः पञ्चवटी । 'तद्धितार्थ–' इति तत्पुरुषः । 'संख्यापूर्वो द्विगुः' इति द्विगुसंज्ञायां 'द्विगोः' इति ङीप् । 'द्विगुरेकवचनम्' इत्येकवचनम् । तस्यां पञ्चवट्याम् । विन्ध्याद्रिः प्रकृतौ वृद्धेः पूर्वावस्थायां इव अनपोढस्थितिः अनतिक्रान्तमर्यादः तस्थौ ॥

रावणावरजा तत्र राघवं मदनातुरा ।
अभिपेदे[1] निदाघार्ता व्यालीव मलयद्रुमम् ॥ ३२ ॥

तत्र पञ्चवट्यां मदनातुरा रावणावरजा शूर्पणखा । 'पूर्वपदात्संज्ञायामगः' इति णत्वम् । राघवम् । निदाघार्ता घर्मतप्ता व्याकुला व्याली भुजंगी मलयद्रुमं चन्दनद्रुमम् इव । अभिपेदे प्राप ॥

सा सीतासंनिधावेव तं वव्रे कथितान्वया ।
अत्यारूढो हि नारीणामकालज्ञो मनोभवः ॥ ३३ ॥

सा शूर्पणखा सीतासंनिधौ एव कथितान्वया कथितस्ववंशा सती तं रामं वव्रे वृतवती । तथा हि । अत्यारूढः अतिप्रवृद्धः नारीणां मनोभवः कामः कालज्ञः अवसरज्ञो न भवति इति अकालज्ञः हि ॥

कलत्रवानहं बाले कनीयांसं[3] भजस्व मे ।
इति रामो वृषस्यन्तीं वृषस्कन्धः शशास ताम् ॥ ३४ ॥

वृषः पुमान् । 'वृषः स्याद्वासवे धर्मे सौरभेये च शुक्रले । पुंराशिभेदयोः शृङ्ग्यां मूषकश्रेष्ठयोरपि ॥' इति विश्वः । वृषं पुरुषमात्मन इच्छतीति वृषस्यन्ती कामुकी । 'वृषस्यन्ती च कामुकी' इत्यमरः । 'सुप आत्मनः क्यच्' इति क्यच्प्रत्ययः । 'अश्वक्षीर–

१ अधो इ. पा. २ 'प्रतिपेदे' इ. पा. ३ यवीयांसम्, लघीयांसम्.

-रवृषलवणानामात्मप्रीतौ क्यचि ' इत्यसुगागमः । ततो लटः शत्रादेशः । ' उगितश्च ' इति -ङीप् । श्लोकार्थस्तु—वृषस्कन्धः रामः वृषस्यन्तीं तां राक्षसीम् ' हे बाले, अहं कलत्रवान् । मेकनीयांसं कनिष्ठं भजस्व इति शशास आज्ञापितवान् ॥

ज्येष्ठाभिगमनात्पूर्वं तेनाप्यनभिनन्दिता ।
साऽभूद्रामाश्रया भूयो नदीवोभयकूलभाक् ॥ ३५ ॥

पूर्वं ज्येष्ठाभिगमनात् तेन लक्ष्मणेन अपि अनभिनन्दिता नाङ्गीकृता भूयः रामाश्रया सा राक्षसी । उभे कूले भजतीति उभयकूलभाक् । नदी इव अभूत् । सा हि यातायाताभ्यां पर्यायेण कूलद्वयगामिनी नदीसदृश्यभूदित्यर्थः ॥

संरम्भं मैथिलीहासः क्षणसौम्यां निनाय ताम् ।
निवातस्तिमितां वेलां चन्द्रोदय इवोदधेः ॥ ३६ ॥

मैथिलीहासः क्षणं सौम्यां सौम्याकारां [ क्षणसौम्यां ] तां राक्षसीम् । निवातेन स्तिमितां निश्चलां [ निवातस्तिमिताम् ] उदधेः वेलाम् अम्बुविकृतिम् । अम्बुपूरमित्यर्थः । ' ' अब्ध्यम्बुविकृतौ वेला ' इत्यमरः । चन्द्रोदयः इव । संरम्भं संक्षोभं निनाय ॥

फलमस्योपहासस्य सद्यः प्राप्स्यसि पश्य माम् ।
मृग्याः परिभवो व्याघ्र्यामित्यवेहि त्वया कृतम् ॥ ३७ ॥

श्लोकद्वयेनान्वयः । अस्य उपहासस्य फलं सद्यः संप्रत्येव प्राप्स्यसि । पश्य माम् । त्वया कर्त्र्या कृतम् उपहासरूपं करणं व्याघ्र्यां विषये मृग्याः कर्त्र्याः परिभवः इति अवेहि ॥

इत्युक्त्वा मैथिलीं भर्तुरङ्के निर्विशतीं भयात् ।
रूपं शूर्पणखा नाम्नः सदृशं प्रत्यपद्यत ॥ ३८ ॥

भयाद् भर्तुः अङ्के निर्विशतीम् आलिङ्गन्तीं मैथिलीम् इति उक्त्वा शूर्पणखा नाम्नः सदृशम् । शूर्पाकारनखयुक्तमित्यर्थः । रूपम् आकारं प्रत्यपद्यत स्वीचकार । अदर्शयदित्यर्थः ॥

लक्ष्मणः प्रथमं श्रुत्वा कोकिलामञ्जुवादिनीम् ।
शिवाघोरस्वनां पश्चाद्बुबुधे विकृतेति ताम् ॥ ३९ ॥

लक्ष्मणः प्रथमं कोकिलावन्मञ्जुवादिनीं [ कोकिलामञ्जुवादिनीम् ] पश्चात् शिवावद्घोरस्वनां [ शिवाघोरस्वनां ] तां शूर्पणखां श्रुत्वा । तस्याः स्वनं श्रुत्वेत्यर्थः । -मुस्वनः शङ्खः श्रूयत इतिवत्प्रयोगः । विकृता मायाविनी इति बुबुधे बुद्धवान् । कर्तरि लिट् ॥

१ न तेनाप्यभि०. २ क्षणं. ३ मृगीप०. ४ मृत्यवे. ५ 'अङ्के-ङ्कं-निविशतीं; अङ्गानि विशतीम्' इ. पा० ६ नाम-नाम्नी. ७ 'भाषिणीम्' इ. पा० ८ स्वरां.

पर्णशालामथ क्षिप्रं विकृष्टासिः प्रविश्य सः ।
वैरूप्यपौनरुक्त्येन भीषणां तामयोजयत् ॥ ४० ॥

अथ स लक्ष्मणः विकृष्टासिः कोशोद्धृतखड्गः सन् क्षिप्रं पर्णशालां प्रविश्य भीषयतीति भीषणाम् । नन्द्यादित्वाल्ल्युट् कर्तरि । तां राक्षसीं वैरूप्यस्य पौनरुक्त्यं द्वैगुण्यलक्षणं तेन [ वैरूप्यपौनरुक्त्येन ] अयोजयत् योजितवान् । स्वभावत एव विकृतां तां कर्णादिच्छेदेन पुनरतिविकृतामकरोदित्यर्थः ॥

सा वक्रनखधारिण्या वेणुकर्कशपर्वया ।
अङ्कुशाकारयाङ्गुल्या तावतर्जयदम्बरे ॥ ४१ ॥

सा वक्रनखं धारयतीति वक्रनखधारिणी । तया [ वक्रनखधारिण्या ] वेणुवत्कर्कशपर्वया [ वेणुकर्कशपर्वया ] । अत एवाङ्कुशस्याकार इवाकारो यस्याः सा तया [ अङ्कुशाकारया ] अङ्गुल्या तौ राघवौ अम्बरे व्योम्नि स्थिता । 'अम्बरं व्योम्नि वाससि ' इत्यमरः । अतर्जयद् अभर्त्सयत् । ' तर्ज भर्त्सने ' इति धातोश्चौरादिकादनुदात्तत्वादात्मनेपदेन भाव्यम् । तथापि चक्षिङो ङित्करणाज्ज्ञापकादनुदात्तेत्वनिमित्तस्यानित्यत्वात्परस्मैपदमूह्यमित्युक्तमाख्यातचन्द्रिकायाम् । ' तर्जयते भर्त्सयते तर्जयतीत्यपि च दृश्यते कविषु इति ॥

प्राप्य चाशु जनस्थानं खरादिभ्यस्तथाविधम् ।
रामोपक्रममाचख्यौ रक्षःपरिभवं नवम् ॥ ४२ ॥

सा आशु जनस्थानं प्राप्य खरादिभ्यः राक्षसेभ्यः तथाविधं स्वाङ्गच्छेदात्मकम् । उपक्रम्यत इत्युपक्रमः । कर्मणि घञ्प्रत्ययः । रामस्य कर्तुरुपक्रमः रामोपक्रमम् । रामेणादावुपक्रान्तमित्यर्थः । ' उपज्ञोपक्रमं तदाद्याचिख्यासायाम् ' इति क्लीबत्वम् । तद् नवं रक्षसां कर्मभूतानां परिभवं [ रक्षःपरिभवं ] आचख्यौ च ॥

मुखावयवलूनां तां नैर्ऋता यत्पुरो दधुः ।
रामाभियायिनां तेषां तदेवाभूदमङ्गलम् ॥ ४३ ॥

नैर्ऋताः राक्षसाः । ' नैर्ऋतो यातुरक्षसी ' इत्यमरः । मुखावयवेषु कर्णादिषु लूनां छिन्नां [ मुखावयवलूनां ] तां पुरः दधुः अग्रे चक्रुरिति यत् तद् एव रामाभियायिनां राममभिद्रवतां तेषाम् अमङ्गलम् अभूत् ॥

उदायुधानापततस्तान्दृप्तान्प्रेक्ष्य राघवः ।
निदधे विजयाशंसां चापे सीतां च लक्ष्मणे ॥ ४४ ॥

उदायुधान् उद्यतायुधान् आपततः आगच्छतः दृप्तान् तान् खरादीन् प्रेक्ष्य राघवः चापे विजयस्याशंसामाशां [ विजयाशंसां ] लक्ष्मणे सीतां च निदधे । सीतारक्षणे लक्ष्मणं नियुज्य स्वयं युद्धाय संनद्ध इति भावः ॥

१ विवृता-निधृता-सिः. २ ॰पुनरुक्तेन, वैरूप्यं पुन॰. ३ [illegible] ४ [illegible]
५ ॰ भवागमम्. ६ मुखेऽवयव॰. ७ गामि॰. ८ [illegible] ९ [illegible]

एको दाशरथिः कामं यातुधानाः सहस्रशः ।
ते तु यावन्त एवाजौ तावांश्च ददृशे स तैः ॥ ४५ ॥

दाशरथिः रामः एकः अद्वितीयः । यातुधानाः कामं सहस्रशः । सन्तीति शेषः । तैः यातुधानैः तु स रामः आजौ ते यातुधानाः यावन्तः यावत्संख्याकाः एव तावान् तावत्संख्याकः च ददृशे ॥

असज्जनेन काकुत्स्थः प्रयुक्तमथ दूषणम् ।
न चक्षमे शुभाचारः स दूषणमिवात्मनः ॥ ४६ ॥

अथ शुभाचारः रणे साधुचारी सद्वृत्तश्च स काकुत्स्थः असज्जनेन दुर्जनेन रक्षोजनेन च प्रयुक्तं प्रेषितमुच्चारितं च दूषणं दूषणाख्यं राक्षसम् आत्मनः दूषणं दोषम् इव न चक्षमे न सेहे । प्रतिकर्तुं प्रवृत्त इत्यर्थः ॥

तं शरैः प्रतिजग्राह खरत्रिशिरसौ च सः ।
क्रमशस्ते पुनस्तस्य चापात्सममिवोद्ययुः ॥ ४७ ॥

स रामः तं दूषणं खरत्रिशिरसौ च शरैः प्रतिजग्राह । प्रतिजहारेत्यर्थः ।[१] क्रमशः यथाक्रमम् । प्रयुक्ता अपीति शेषः । तस्य ते शराः पुनः चापात्समं युगपत् इव उद्ययुः । अतिलघुहस्त इति भावः ॥

तैस्त्रयाणां शितैर्बाणैर्यथापूर्वविशुद्धिभिः ।
आयुर्देहातिगैः पीतं रुधिरं तु पतत्रिभिः ॥ ४८ ॥

देहमतीत्य भित्वा गच्छन्तीति देहातिगाः तैः [ देहातिगैः ] । यथास्थिता पूर्वविशुद्धिर्येषां तैः [ यथापूर्वविशुद्धिभिः ] । अतिवेगत्वेन देहभेदात्प्रागिव रुधिरलेपरहितैरित्यर्थः । शितैः तीक्ष्णैः तैः बाणैः त्रयाणां खरादीनां आयुः पीतं रुधिरं तु पतत्रिभिः पीतम् ॥

तस्मिन्रामशरोत्कृत्ते बले महति रक्षसाम् ।
उत्थितं ददृशेऽन्यच्च कबन्धेभ्यो न किंचन ॥ ४९ ॥

तस्मिन् रामशरोत्कृत्ते छिन्ने [ रामशरोत्कृत्ते ] महति रक्षसां बले उत्थितम् उत्थानक्रियाविशिष्टं प्राणिनां कबन्धेभ्यः शिरोहीनशरीरेभ्यः । 'कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम् ।' इत्यमरः । अन्यत् च अन्यत् किंचन न ददृशे । कबन्धेभ्य इत्यत्र 'अन्यारात्—' इति पञ्चमी । निःशेषं हतमित्यर्थः ॥

सा बाणवर्षिणं रामं योधयित्वा सुरद्विषाम् ।
अप्रबोधाय सुष्वाप गृध्रच्छाये वरूथिनी ॥ ५० ॥

---

१ ०धी रामः इ. पा. २ 'एवासंख्यावद्धा' इ. पा० । अत्र हेमाद्रिः—तावद्धा तावत्प्रकारः । संख्याया विधार्थे धा । अधिकरणविचाले च इति ॥ अधिकरणं द्रव्यम् । विचालः संख्यान्तरापादनमेकस्यानेकीकरणं । एकं राशिं पञ्चधाकुरु इति वामनः ( काशिकावृत्तिः ). ३ 'अपि' इ. पा. ४ 'सदाचारः' इ० पा०. ५ शनैः. ६ ०पूर्वं. ७ च. ८ उच्छ्रितं. ९ चान्यत्, अन्यत्तु, अन्यच्च इ.पा०. १० वर्षिणी.

सा सुरद्विषां वरूथिनी सेना बाणवर्षिणं रामं योधयित्वा युद्धं कारयित्वा गृध्राणां छाया गृध्रच्छायम् । 'छाया बाहुल्ये' इति क्लीबत्वम् । [गृध्रच्छाये] अप्रबोधाय अपुनर्बोधाय सुष्वाप ममारेत्यर्थः । अत्र सुरतश्रान्तकान्तासमाधिर्ध्वन्यते ॥

राघवास्त्रविदीर्णानां रावणं प्रति रक्षसाम् ।
तेषां शूर्पणखैवैका दुष्प्रवृत्तिहराभवत् ॥ ५१ ॥

एका शूर्पवन्नखानि यस्याः सा शूर्पणखा । 'पूर्वपदात्संज्ञायाम्' इति णत्वम् । 'नखमुखात्संज्ञायाम्' इति ङीष्प्रतिषेधः । सा एव रावणं प्रति राघवास्त्रैर्विदीर्णानां हतानां [राघवास्त्रविदीर्णानां] तेषां रक्षसां खरादीनां दुष्प्रवृत्तिं दुर्वार्तां हरति प्रापयतीति दुष्प्रवृत्तिहरा अभवत् । 'हरतेरनुद्यमनेऽच्' इत्यच्प्रत्ययः ॥

निग्रहात्स्वसुराप्तानां वधाच्च धनदानुजः ।
रामेण[1] निहितं मेने पदं दशसु मूर्धसु ॥ ५२ ॥

स्वसुः शूर्पणखायाः निग्रहात् अङ्गच्छेदात् आप्तानां बन्धूनां खरादीनां वधाच्च कारणात् धनदानुजः रावणः रामेण दशसु मूर्धसु पदं पादं निहितं मेने ॥

रक्षसा मृगरूपेण वञ्चयित्वा स राघवौ ।
जहार सीतां पक्षीन्द्रप्रयासक्षणविघ्नितः ॥ ५३ ॥

स रावणः मृगरूपेण रक्षसा मारीचेन राघवौ वञ्चयित्वा प्रतार्य पक्षीन्द्रस्य जटायुषः प्रयासेन युद्धरूपेण क्षणं विघ्नितः संजातविघ्नः [पक्षीन्द्रप्रयासक्षणविघ्नितः] सन् सीतां जहार ॥

तौ सीतान्वेषिणौ गृध्रं लूनपक्षमपश्यताम् ।
प्राणैर्दशरथप्रीतेरनृणं कण्ठवर्तिभिः ॥ ५४ ॥

सीतान्वेषिणौ तौ राघवौ लूनपक्षं रावणेन छिन्नपक्षं कण्ठवर्तिभिः प्राणैः दशरथप्रीतेः दशरथसख्यस्य अनृणम् ऋणैर्विमुक्तं गृध्रं जटायुषम् अपश्यतां दृष्टवन्तौ । शेर्लङि रूपम् ॥

स रावणहृतां ताभ्यां वचसाचष्ट मैथिलीम् ।
आत्मनः सुमहत्कर्म व्रणैरावेद्य संस्थितः ॥ ५५ ॥

स जटायुः रावणहृतां मैथिलीं ताभ्यां रामलक्ष्मणाभ्याम् । 'क्रियाग्रहणमपि कर्तव्यम्' इति संप्रदानत्वाच्चतुर्थी । वचसा वागृत्त्या आचष्ट । आत्मनः सुमहत्कर्म दरूपं व्रणैः आवेद्य संस्थितः मृतः ॥

---

१ क्षामितुग्धानां,॰विशीर्णानाम्. २ नि॰. ३ 'आख्याय' इ॰. ४ 'आत्मनस्तु महत्' इ. च पा॰.

तयोस्तस्मिन्नवीभूतपितृव्यापत्तिशोकयोः ।
पितरीवाग्निसंस्कारात्परा ववृतिरे क्रियाः ॥ ५६ ॥

व्यापत्तिर्मरणम् । नवीभूतः पितृव्यापत्तिशोकः ययोः तौ तयोः [ नवीभूतपितृव्यापत्तिशोकयोः ] तयोः राघवयोः तस्मिन् गृध्रे पितरि इव अग्निसंस्कारात् अग्निसंस्कारमारभ्य पराः उत्तराः क्रियाः ववृतिरे अवर्तन्त । तस्य पितृवदौर्ध्वदैहिकं चक्रतुरित्यर्थः ॥

वधनिर्धूतशापस्य कबन्धस्योपदेशतः ।
मुमूर्छ सख्यं रामस्य समानव्यसने हरौ ॥ ५७ ॥

वधेन रामकृतेन निर्धूतशापस्य देवभुवं गतस्य [ वधनिर्धूतशापस्य ] कबन्धस्य रक्षोविशेषस्य उपदेशतः रामस्य समानव्यसने समानापदि । सख्यार्थिनीत्यर्थः । हरौ कपौ सुग्रीवे । ' शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु । ' इत्यमरः । सख्यं मुमूर्छ ववृधे ॥

स हत्वा वालिनं वीरस्तत्पदे चिरकाङ्क्षिते ।
धातोः स्थान इवादेशं सुग्रीवं संन्यवेशयत् ॥ ५८ ॥

वीरः स रामः वालिनं सुग्रीवाग्रजं हत्वा चिरकाङ्क्षिते तत्पदे वालिस्थाने । धातोः स्थाने आदेशम् इव आदेशभूतं धात्वन्तरमिवेत्यर्थः । सुग्रीवं संन्यवेशयत् स्थापितवान् । यथा ' अस्तेर्भूः ' इत्यस्तिधातोः स्थाने आदेशो भूधातुरस्तिकार्यमशेषं समभिधत्ते तद्वदिति भावः । आदेशो नाम शब्दान्तरस्य स्थाने विधीयमानं शब्दान्तरमभिधीयते ॥

इतस्ततश्च वैदेहीमन्वेष्टुं भर्तृचोदिताः ।
कपयश्चेरुरार्तस्य रामस्येव मनोरथाः ॥ ५९ ॥

वैदेहीम् अन्वेष्टुं मार्गितुं भर्त्रा सुग्रीवेण चोदिताः प्रयुक्ताः [ भर्तृचोदिताः ] कपयः हनुमत्प्रमुखाः । आर्तस्य विरहातुरस्य रामस्य मनोरथाः कामाः इव इतस्ततः चेरुः नानादेशेषु बभ्रमुः च ॥

प्रवृत्तावुपलब्धायां तस्याः संपातिदर्शनात् ।
मारुतिः सागरं तीर्णः संसारमिव निर्ममः ॥ ६० ॥

संपातिर्नाम जटायुषो ज्यायान्भ्राता । तस्य दर्शनात् [ संपातिदर्शनात् ] । तन्मुखादिति भावः । तस्याः सीतायाः प्रवृत्तौ वार्तायाम् । ' वार्ता प्रवृत्तिर्वृत्तान्तः ' इत्यमरः । उपलब्धायां ज्ञातायां सत्याम् । मरुतस्यापत्यं पुमान् मारुतिः हनुमान् सागरम् । ममेत्येतदव्ययं ममतावाचि । तद्रहितः निर्ममः निःस्पृहः संसारम् अविद्याबन्धनम् इव तीर्णः ततार । तरतेः कर्तरि क्तः ॥

---

१ 'दुःखयोः' इ. पा० २ 'संस्कारानन्तरा ववृते क्रिया' इ. पा०. ३ निर्धौत, तपापस्य. ४ वीरस्तं तत्पदे-त्वपदे. ५ सं हत्वा...वीरं...स न्यवेशयत्. ६ तोय. ७ नोदिताः. ८ हत्कम्प.

दृष्टा विचिन्वता तेन लङ्कायां राक्षसीवृता ।
जानकी विषवल्लीभिः परीतेव महौषधिः ॥ ६१ ॥

लङ्कायां रावणराजधान्यां विचिन्वता मृगयमाणेन तेन मारुतिना राक्षसीभिर्वृता [ राक्षसीवृता ] जानकी । विषवल्लीभिः परीता परिवृता महौषधिः संजीवनी लता इव । दृष्टा ॥

तस्यै भर्तुरभिज्ञानमङ्गुलीयं ददौ कपिः ।
प्रत्युद्गतमिवानुष्णैस्तदानन्दाश्रुबिन्दुभिः ॥ ६२ ॥

कपिः हनुमान् भर्तुः संबन्धि अभिज्ञानं प्रत्यभिज्ञानसाधकम् अङ्गुलीयम् ऊर्मिकाम् । 'अङ्गुलीयकमूर्मिका' इत्यमरः । 'जिह्वामूलाङ्गुलेश्छः' इति छप्रत्ययः । तस्यै जानक्यै ददौ । किंविधमङ्गुलीयम् । अनुष्णैः शीतलैस्तस्या आनन्दाश्रुबिन्दुभिः [ तदानन्दाश्रुबिन्दुभिः ] प्रत्युद्गतम् इव स्थितम् । भर्त्रभिज्ञानदर्शनादानन्दबाष्पो जात इत्यर्थः ॥

निर्वाप्य प्रियसंदेशैः सीतामक्षवधोद्धतः ।
स ददाह पुरीं लङ्कां क्षणसोढारिनिग्रहः ॥ ६३ ॥

स कपिः । प्रियस्य रामस्य संदेशैर्वाचिकैः [ प्रियसंदेशैः ] सीतां निर्वाप्य सुखयित्वा । अक्षस्य रावणकुमारस्य वधेनोद्धतो दृप्तः [ अक्षवधोद्धतः ] सन् । [ क्षणसोढारिनिग्रहः ] क्षणं सोढ इन्द्रजितः कर्तुः निग्रहो बाधो ब्रह्मास्त्रबन्धनरूपो येन स तथोक्तः सन् । लङ्कां पुरीं ददाह भस्मीचकार ॥

प्रत्यभिज्ञानरत्नं च रामायादर्शयत्कृती ।
हृदयं स्वयमायातं वैदेह्या इव मूर्तिमत् ॥ ६४ ॥

कृती कृतकृत्यः कपिः स्वयम् आयातं मूर्तिमद् वैदेह्या हृदयम् इव स्थितं तस्या एव प्रत्यभिज्ञानरत्नं च रामाय अदर्शयत् ॥

स प्राप हृदयन्यस्तमणिस्पर्शनिमीलितः ।
अपयोधरसंसर्गां प्रियालिङ्गननिर्वृतिम् ॥ ६५ ॥

हृदये वक्षसि न्यस्तस्य धृतस्य मणेरभिज्ञानरत्नस्य । स्पर्शेन निमीलितो मोहितः [ हृदयन्यस्तमणिस्पर्शनिमीलितः ] स रामः अविद्यमानः पयोधरसंसर्गः स्तनस्पर्शो यस्यास्तां तथाभूतां [ अपयोधरसंसर्गां ] प्रियाया आलिङ्गनेन या निर्वृतिरानन्दस्तां [ प्रियालिङ्गननिर्वृतिं ] प्राप ॥

श्रुत्वा रामः प्रियोदन्तं मेने तत्संगमोत्सुकः ।
महार्णवपरिक्षेपं लङ्कायाः परिखालघुम् ॥ ६६ ॥

प्रियाया उदन्तं वार्ताम् । 'उदन्तः साधुवार्तयोः' इति विश्वः । [ प्रियोदन्तं ] श्रुत्वा तस्याः

---

१ हरिः. २ वारिभिः इ. पा०. ३ रक्षोवधद्धूर्णा, रक्षोवधोद्धुरः ( राक्षसवधोत्कटः—इति वल्लभः ); अक्षवधोद्धुरः ( उद्धुरः प्रचण्डः इ. हे०, उद्धतः इ. चारि० ). ४ विभीः. ५ क्षणं सो०, ०निग्रहः. ६ संकर्गम्, ७ परिधा.

सीतायाः संगम उत्सुकः [ तत्संगमोत्सुकः ] रामः लङ्कायाः संबन्धी यो महार्णव एव परिक्षेपः परिवेष्टस्तं [ महार्णवपरिक्षेपम् ] परिखालघुं दुर्गवेष्टनवस्तुतरं मेने ॥

स प्रतस्थेऽरिनाशाय हरिसैन्यैरनुद्रुतः ।
न केवलं भुवः पृष्ठे व्योम्नि संबाधवर्तिभिः ॥ ६७ ॥

केवलम् एकं भुवः पृष्ठे भूतले न किं तु व्योम्नि च संबाधवर्तिभिः संकटगामिभिः हरिसैन्यैः कपिबलैः अनुद्रुतः अन्वितः सन् स रामः अरिनाशाय प्रतस्थे चचाल ॥

निविष्टमुदधेः कूले तं प्रपेदे विभीषणः ।
स्नेहाद्राक्षसलक्ष्म्येव बुद्धिमाविश्य चोदितः ॥ ६८ ॥

उदधेः कूले निविष्टं तं रामम् । विशेषेण भीषयते शत्रूनिति विभीषणः रावणानुजः । राक्षसलक्ष्म्या स्नेहाद् बुद्धिं कर्तव्य ज्ञानम् आविश्य उपदिश्य चोदितः प्रणोदितः ( प्रेरितः इ० पा० ) इव प्रपेदे प्राप्तः ॥

तस्मै निशाचरैश्वर्यं प्रतिशुश्राव राघवः ।
काले खलु समारब्धाः फलं बध्नन्ति नीतयः ॥ ६९ ॥

राघवः तस्मै विभीषणाय । 'प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता' इति संप्रदानत्वाच्चतुर्थी । निशाचरैश्वर्यं राक्षसाधिपत्यं प्रतिशुश्राव प्रतिज्ञातवान् । तथा हि । काले अवसरे समारब्धाः प्रक्रान्ताः नीतयः फलं बध्नन्ति गृह्णन्ति । जनयन्तीत्यर्थः । खलु ॥

स सेतुं बन्धयामास प्लवगैर्लवणाम्भसि ।
रसातलादिवोन्मग्नं शेषं स्वप्नाय शार्ङ्गिणः ॥ ७० ॥

स रामो लवणं क्षारमम्भो यस्यासौ लवणाम्भस्तस्मिन् [ लवणाम्भसि ] लवणाब्धौ प्लवगैः प्लवगैः । शार्ङ्गिणः विष्णोः स्वप्नाय शयनाय रसातलात् पातालात् उन्मग्नम् उत्थितं शेषम् इव स्थितम् । सेतुं बन्धयामास ॥

तेनोत्तीर्य पथा लङ्कां रोधयामास पिङ्गलैः ।
द्वितीयं हेमप्राकारं कुर्वद्भिरिव वानरैः ॥ ७१ ॥

रामः तेन पथा सेतुमार्गेण उत्तीर्य । सागरमिति शेषः । पिङ्गलैः सुवर्णवर्णैरत एव द्वितीयं हेमप्राकारं कुर्वद्भिः इव स्थितैः वानरैः लङ्कां रोधयामास ॥

रणः प्रववृते तत्र भीमः प्लवगरक्षसाम् ।
दिग्विजृम्भितकाकुत्स्थपौलस्त्यजयघोषणः ॥ ७२ ॥

तत्र लङ्कायां प्लवगानां रक्षसां च [ प्लवगरक्षसाम् ] भीमः भयंकरः [ दिग्विजृम्भितकाकुत्स्थपौलस्त्यजयघोषणः ] दिग्विजृम्भिता काकुत्स्थपौलस्त्ययोः रामराव-

१ धन्व० २ संबे. ३ वर्तने, वर्तिभिः. ४ निवि०. ५ ०जो [illegible]. ६ प्लवगैः, लवणोदधौ इ. त. ७ [illegible], [illegible]. तेन, उत्तीर्य. ८ [illegible]. ९ [illegible]. १० वेष्टयामास. ११ प्रववृते. १२ [illegible]. १३ ०घोषणम्.

योर्नयघोषणा जयशब्दा यस्मिन्स तथोक्तः रणः प्रववृते प्रवृत्तः । 'अस्त्रियां समरानीकरणाः कलहविग्रहौ ।' इत्यमरः ॥

**पादपाविद्धपरिघः[1] शिलानिष्पिष्टमुद्गरः ।**
**अतिशस्त्रनखन्यासः शैलरुग्णमतंगजः ॥ ७३ ॥**

किंविधो रणः । [ **पादपाविद्धपरिघः** ] पादपैर्वृक्षैराविद्धा भग्नाः परिघा लोहबद्धकाष्ठानि यस्मिन्स तथोक्तः । 'परिघः परिघातनः ' इत्यमरः । [ **शिलानिष्पिष्टमुद्गरः** ] शिलाभिर्निष्पिष्टाश्चूर्णिता मुद्गरा अयोघना यस्मिन्स तथोक्तः । 'द्रुघणो मुद्गरघनौ ' इत्यमरः । [ **अतिशस्त्रनखन्यासः** ] अतिशस्त्राः शस्त्राण्यतिक्रान्ता नखन्यासा यस्मिन्स तथोक्तः । [ **शैलरुग्णमतंगजः** ] शैलै रुग्णा भग्ना मतंगजा यस्मिन्स तथोक्तः ॥

**अथ रामशिरश्छेददर्शनोद्भ्रान्तचेतनाम्[2] ।**
**सीतां मायेति शंसन्ती त्रिजटा समजीवयत् ॥ ७४ ॥**

**अथ** अनन्तरम् । छिद्यत इति छेदः खण्डः । शिर एव छेद इति विग्रहः । रामशिरश्छेदस्य विद्युज्जिह्वाख्यराक्षसमायानिर्मितस्य दर्शनेनोद्भ्रान्तचेतनां गतसंज्ञां [ **रामशिरश्छेददर्शनोद्भ्रान्तचेतनाम्** ] **सीतां त्रिजटा** नाम काचित्सीतापक्षपातिनी राक्षसी [ **माया** ] मायाकल्पितं न त्वेतत्सत्यम् **इति शंसन्ती** ब्रुवाणा । 'शप्श्यनोर्नित्यम्' इति नित्यं नुमागमः । **समजीवयत्** ॥

**कामं जीवति मे नाथ इति सा विजहौ शुचम् ।**
**प्राङ्मत्वा सत्यमस्यान्तं जीवितास्मीति लज्जिता ॥ ७५ ॥**

**सा** सीता **मे नाथः जीवति इति** हेतोः **शुचं** शोकं **कामं विजहौ** । किंतु **प्राक्** पूर्वम् **अस्य** नाथस्य **अन्तं** नाशं **सत्यं** यथार्थं **मत्वा जीविता** जीवितवती **अस्मि इति** हेतोः **लज्जिता** लज्जावती । कर्तरि क्तः । दुःखादपि दुःसहो लज्जाभारः इति भावः ॥

**गरुडापातविश्लिष्ट[3]मेघनादास्त्रबन्धनः ।**
**दाशरथ्योः क्षणक्लेशः[4] स्वप्नवृत्त इवाभवत् ॥ ७६ ॥**

[ **गरुडापातविश्लिष्टमेघनादास्त्रबन्धनः** ] गरुडस्तार्क्ष्यः । तस्यापातेनागमनेन विश्लिष्टं मेघनादस्येन्द्रजितोऽस्त्रेण नागपाशेन बन्धनं यस्मिन्स तथोक्तः **क्षणक्लेशः** । **दाशरथ्योः** रामलक्ष्मणयोः **स्वप्नवृत्तः** स्वप्नावस्थानुभूत **इव अभवत्** ॥

**ततो बिभेद पौलस्त्यः शक्त्या वक्षसि लक्ष्मणम् ।**
**रामस्त्वनाहतोऽप्यासीद्विदीर्ण[5]हृदयः शुचा ॥ ७७ ॥**

**ततः पौलस्त्यः** रावणः **शक्त्या** कासूनामकेनायुधेन । 'कासूसामर्थ्ययोः शक्तिः'

---

१ भग्न. २ दर्शने भ्रान्त; चेतसं-साम्र. ३ विश्लेषि; ०बन्धनम्. ४ क्लेशः स्वप्नवृत्तम् इ. पा. ५ विशीर्णहृदयः.

इत्यमरः। लक्ष्मणं वक्षसि बिभेद विदारयामास । रामः तु अनाहतः अपि अहतोऽपि शुचा शोकेन विदीर्णहृदयः आसीत् ॥

स मारुतिसमानीतमहौषधिहृतव्यथः ।
लङ्कास्त्रीणां पुनश्चक्रे विलापाचार्यकं शरैः ॥ ७८ ॥

स लक्ष्मणो मारुतिना मरुत्सुतेन हनुमता समानीतया महौषध्या संजीविन्या हृतव्यथः [ मारुतिसमानीतमहौषधिहृतव्यथः ] सन् पुनः शरैः लङ्कास्त्रीणां विलापे परिदेवने। 'विलापः परिदेवनम्' इत्यमरः। आचार्यकमाचार्यकर्म [ विलापाचार्यकम् ] 'योपधाद्गुरूपोत्तमाद्वुञ्' इति वुञ्प्रत्ययः। चक्रे। पुनरपि राक्षसाञ्जघानेति व्यज्यते ॥

स नादं मेघनादस्य धनुश्चेन्द्रायुधप्रभम् ।
मेघस्येव शरत्कालो न किंचित्पर्यशेषयत् ॥ ७९ ॥

स लक्ष्मणः। शरत्कालः मेघस्य इव। मेघनादस्य इन्द्रजितः नादं सिंहनादम्। अन्यत्र गर्जितं च। इन्द्रायुधप्रभं शक्रधनुःप्रभं धनुः च किंचिद् अल्पमपि न पर्यशेषयत् नावशेषितवान्। तमवधीदित्यर्थः ॥

कुम्भकर्णः कपीन्द्रेण तुल्यावस्थः स्वसुः कृतः ।
रुरोध रामं शृङ्गीव टङ्कच्छिन्नमनःशिलः ॥ ८० ॥

कपीन्द्रेण सुग्रीवेण स्वसुः शूर्पणखायाः तुल्यावस्थः नासाकर्णच्छेदेन सदृशः कृतः कुम्भकर्णः [ टङ्कच्छिन्नमनःशिलः ] टङ्केन शिलाभेदकशस्त्रेण छिन्ना मनःशिला रक्तवर्णधातुविशेषो यस्य स तथोक्तः। 'टङ्कः पाषाणभेदनः' इति, 'धातुर्मनःशिलाद्यद्रेः' इति चामरः। शृङ्गी शिखरी इव। रामं रुरोध ॥

अकाले बोधितो भ्रात्रा प्रियस्वप्नो वृथा भवान्[३] ।
रामेषुभिरितीवासौ दीर्घनिद्रां प्रवेशितः ॥ ८१ ॥

प्रियस्वप्नः इष्टनिद्रोऽनुजो भवान्वृथा भ्रात्रा रावणेन अकाले बोधितः इति इव असौ कुम्भकर्णः रामेषुभिः रामबाणैः दीर्घनिद्रां मरणं प्रवेशितः गमितः। यथा लोकेऽभिष्टवस्तुविनाशदुःखितस्य ततोऽपि भूयिष्ठमुपपाद्यते तद्वदिति भावः ॥

इतराण्यपि रक्षांसि पेतुर्वानरकोटिषु ।
रजांसि समरोत्थानि तच्छोणितनदीष्विव ॥ ८२ ॥

इतराणि रक्षांसि अपि वानरकोटिषु। समरोत्थानि रजांसि तेषां रक्षसां शोणितनदीषु रक्तप्रवाहेषु [ तच्छोणितनदीषु ] इव। पेतुः। निपत्य मृतानीत्यर्थः ॥

निर्ययावथ पौलस्त्यः पुनर्युद्धाय मन्दिरात् ।
अरावणमरामं वा जगदद्येति निश्चितः ॥ ८३ ॥

---

१ मारुतसुतानीत०. २ हृत-गत-व्यथः. ७९—८० मध्ये—क्लेशेन महता निद्रां त्याजितं रणदुर्जयम्। रावणः प्रेषयामास युद्धायानुजमात्मनः ॥ स जघान तदादेशात्कपीन्प्रमाननेकशः। विवेश च पुरीं लङ्कां समादाय हरीश्वरम् ॥ इत्य० पद्यद्वयं क्वचित्. ३ अनुजः; वृथाऽभवत्; ०भो निशाचर-इ० पा०. ४ निश्चितम्.

- अथ पौलस्त्यः रावणः अद्य जगद् अरावणं रावणशून्यम् अरामं रामशून्यं वा भवेत् इति निश्चितः निश्चितवान्। कर्तरि क्तः। विजयमरणयोरन्यतरनिश्चयवान् पुनः युद्धाय मन्दिरात् निर्ययौ निर्जगाम॥

रामं पदातिमालोक्य लङ्केशं च वरूथिनम्।
हरियुग्यं रथं तस्मै प्रजिघाय पुरंदरः॥ ८४॥

पादाभ्यामततीति पदातिः। तं [ पदातिम् ] पादचारिणं रामम्। वरूथो रथगुप्तिः। 'रथगुप्तिर्वरूथो ना' इत्यमरः। अत्र वरूथेन रथो लक्ष्यते। वरूथिनं रथिनं लङ्केशं च आलोक्य पुरंदरः इन्द्रः। युगं वहन्तीति युग्या रथाश्वाः। 'तद्वहति रथयुगप्रासङ्गम्' इति यत्प्रत्ययः। हरियुग्यं कपिलवर्णाश्वम्। 'शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु' इत्यमरः। रथं तस्मै रामाय प्रजिघाय प्रहितवान्॥

तमाधूतध्वजपटं व्योमगङ्गोर्मिवायुभिः।
देवसूतभुजालम्वी जैत्रमध्यास्त राघवः॥ ८५॥

राघवः व्योमगङ्गोर्मिवायुभिः आधूतध्वजपटम्। मार्गवशादिति भावः। जेतैव जैत्रो जयनशीलः। तं जैत्रम्। जेतृशब्दात्तृन्नन्तात् 'प्रज्ञादिभ्यश्च' इति स्वार्थेऽण्प्रत्ययः। तं रथं देवसूतभुजालम्वी मातलिहस्तावलम्बः सन् अध्यास्त अधिष्ठितवान्। आसेर्लङ्॥

मातलिस्तस्य माहेन्द्रमामुमोच तनुच्छदम्।
यत्रोत्पलदलक्लैव्यमस्त्राण्यापुः सुरद्विषाम्॥ ८६॥

मातलिः इन्द्रसारथिः माहेन्द्रम्। तनुश्छाद्यतेऽनेनेति तनुच्छदो वर्म। 'पुंसि संज्ञायां घः प्रायेण' इति घः। तं [ तनुच्छदं ] तस्य रामस्य आमुमोच आसञ्जयामास। यत्र तनुच्छदे सुरद्विषाम् अस्त्राणि उत्पलदलानां यत्क्लैव्यं नपुंसकत्वं निरर्थकत्वं तद् [ उत्पलदलक्लैव्यम् ] आपुः॥

अन्योन्यदर्शनप्राप्तविक्रमावसरं चिरात्।
रामरावणयोर्युद्धं चरितार्थमिवाभवत्॥ ८७॥

चिरात् अन्योन्यदर्शनेन प्राप्तविक्रमावसरं [ अन्योन्यदर्शनप्राप्तविक्रमावसरं ] रामरावणयोः युद्धं योधनं चरितार्थं सफलम् अभवद् इव। प्राक्पराक्रमावसरदौर्लभ्यादिफलस्याय तल्लाभात्साफल्यमुत्प्रेक्ष्यते॥

भूजमूर्धोरुबाहुल्यादेकोऽपि धनदानुजः।
ददृशे अयथापूर्वो मातृवंश इव स्थितः॥ ८८॥

यथा भूतः पूर्वं यथापूर्वः। सुप्सुपेति समासः। यथापूर्वो न भवती अयथापूर्वः। निहतवन्धुत्वाद्रक्षःपरिवारशून्य इत्यर्थः। अत एव एकोऽपि सन् धनदानुजः रावणः।

---

१ शस्त्राणि. २ वैरम्. ३ भुजोरुमाद्व°. ४ सोऽय°; हि यथापूर्वः इ° पा°;यथापूर्वम् इ° मू° टी° पाठः। 'पूर्वमनतिक्रम्य यथापूर्वम्' इ° मल्लि°।

भुजाश्च मूर्धानश्चोरवः पादाश्च भुजमूर्धोरु। प्राण्यङ्गत्वाद्द्वन्द्वैकवद्भावः। तस्य बाहुल्याद्बहुत्वाद्धेतोः [ भुजमूर्धोरुबाहुल्यात् ]। तद्बहुत्वे यादवः—'दशास्यो विंशतिभुजश्चतुष्पान्मातृमन्दिरे। [ लङ्केश्वरो यातुपतिः सप्ताङ्घ्रोस्य विलोचकः ॥ ]' इति। मातृवंशे मातृसंबन्धिनि वर्गे स्थित इव ददृशे दृष्टः हि। 'वंशो वेणौ कुले वर्गे' इति विश्वः। अत्र रावणमातुः [ केशिन्याः ] रक्षोजातित्वात्तद्वर्गो रक्षोवर्ग इति लभ्यते। अतश्चैकोऽप्यनेकरक्षःपरिवृत इवालक्ष्यतेत्यर्थः ॥

जेतारं लोकपालानां स्वमुखैरर्चितेश्वरम्।
रामस्तुलितकैलासमरातिं बह्वमन्यत ॥ ८९ ॥

लोकपालानाम् इन्द्रादीनां जेतारम्। 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठी। स्वमुखैः स्वशिरोभिः अर्चितेश्वरं तुलितकैलासम् उत्क्षिप्तरुद्राद्रिं तमेवं शौर्यवीर्यसत्त्वसंपन्नं महावीरम् अरातिं शत्रुं रामः गुणग्राहित्वाज्जेतव्योत्कर्षस्य जेतुः स्वोत्कर्षहेतुत्वाच्च बह्वमन्यत। साधु मद्विक्रमस्यायं पर्याप्तो विषय इति बहुमानमकरोदित्यर्थः। बह्विति क्रियाविशेषणम् ॥

तस्य स्फुरति पौलस्त्यः सीतासंगमशंसिनि।
निचखानाधिकक्रोधः शरं सव्येतरे भुजे ॥ ९० ॥

अधिकक्रोधः पौलस्त्यः स्फुरति स्पन्दमानेऽत एव सीतासंगमशंसिनि तस्य रामस्य सव्य इतरो यस्मात् सव्येतरे दक्षिणे। 'न बहुव्रीहौ' इतीतरशब्दस्य सर्वनामसंज्ञाप्रतिषेधः। भुजे शरं निचखान निखातवान् ॥

रावणस्यापि रामास्तो भित्त्वा हृदयमाशुगः।
विवेश भुवमाख्यातुमुरगेभ्य इव प्रियम् ॥ ९१ ॥

रामेणास्तः क्षिप्त [ रामास्तः ] आशुगः बाणः। विश्रवसोऽपत्यं पुमान् रावणः। विश्रवःशब्दादपत्यार्थेऽण्प्रत्यये सति 'विश्रवसो विश्रवणरवणौ' इति रवणादेशः। तस्य रावणस्य अपि हृदयं वक्षः भित्त्वा विदार्य। उरगेभ्यः पातालवासिभ्यः प्रियमाख्यातुमिव। भुवं विवेश ॥

वचसैव तयोर्वाक्यमस्त्रमस्त्रेण निघ्नतोः।
अन्योन्यजयसंरम्भो ववृधे वादिनोरिव ॥ ९२ ॥

वाक्यं वचसा इव अस्त्रमस्त्रेण निघ्नतोः प्रतिकुर्वतोः तयोः रामरावणयोः। वादिनोः कथकयोः इव। अन्योन्यविषये जयसंरम्भः [ अन्योन्यजयसंरम्भः ] ववृधे ॥

विक्रमव्यतिहारेण सामान्याभूद्द्वयोरपि।
जयश्रीरन्तरा वेदिर्मत्तवारणयोरिव ॥ ९३ ॥

जयश्रीः विक्रमस्य व्यतिहारेण पर्यायक्रमेण [ विक्रमव्यतिहारेण ] तयोः द्वयोः अपि। अन्तरा मध्ये। अव्ययमेतत्। वेदिः वेद्याकारा भित्तिः मत्तवारणयोः इव।

---

१ 'माता पुष्पोत्कटानाम्नी तस्याः वंशे' इ० हे०; 'मातुर्निकषानाम्न्याः' इ० चा० दि०।
१ सर्वसैन्यानां पुरोऽभ्यर्चि०। २ मर्मणि, मर्मरे. ४ कोपात्. ५ र मार्ग...आशुगं. ६ 'एव' इ० पा०

-सामान्या साधारणा अभूत्। न त्वन्यतरनियतेत्यर्थः। अत्र मत्तवारणयोरित्यत्र द्वयोरित्यत्र च 'अन्तरान्तरेण युक्ते' इति द्वितीया न भवति। अन्तराशब्दस्योपकारीत्यान्यत्रान्वयात्। मध्ये कामपि भित्तिं कृत्वा गजौ योधयन्तीति प्रसिद्धिः॥

**कृतप्रतिकृतप्रीतैस्तयोर्मुक्तां सुरासुरैः।**
**परस्परशरत्राताः पुष्पवृष्टिं न सेहिरे॥ ९४॥**

स्वयमस्त्रप्रयोगः कृतं प्रतिकृतं परकृतप्रतीकारस्ताभ्यां प्रीतैः [**कृतप्रतिकृतप्रीतैः**] **सुरासुरैः** यथासंख्यं **तयोः** रामरावणयोः **मुक्तां पुष्पवृष्टिम्**। द्वयामिति शेषः। परस्परं शरत्राताः [**परस्परशरत्राताः**] **न सेहिरे**। अहमबालं किं त्वयेति चान्तराल एवेतुरेतरबाणवृष्टिरितरेतरपुष्पवृष्टिमवारयदित्यर्थः॥

**अयःशङ्कुचितां रक्षः शतघ्नीमथ शत्रवे।**
**हृतां वैवस्वतस्येव कूटशाल्मलिमक्षिपत्॥ ९५॥**

**अथ रक्षः** रावणोऽयसः शङ्कुभिः कीलैश्चितां कीर्णां [**अयःशङ्कुचितां**] **शतघ्नीं** लोहकण्टककीलितयष्टिविशेषाम्। 'शतघ्नी तु चतुस्ताला लोहकण्टकसंचिता।' इति केशवः। **हृतां** विजयलब्धाम्। **वैवस्वतस्य** अन्तकस्य **कूटशाल्मलिमिव**। **शत्रवे** राघवाय **अक्षिपत्** क्षिप्तवान्। कूटशाल्मलिरिव कूटशाल्मलिरिति व्युत्पत्त्या वैवस्वतगदाया गौणी संज्ञा। कूटशाल्मलिर्नामैकमूलप्रकृतिः कण्टकी वृक्षविशेषः। 'रोचनः कूटशाल्मलिः' इत्यमरः। तत्सादृश्यं च गदाया अयःशङ्कुचितत्वादनुसंधेयम्॥

**राघवो रथमप्राप्तां तामाशां च सुरद्विषाम्।**
**अर्धचन्द्रमुखैर्बाणैश्चिच्छेद कदलीसुखम्॥ ९६॥**

**राघवः रथमप्राप्तां तां** शतघ्नीं **सुरद्विषां** रक्षसाम् **आशां** विजयतृष्णां **च**। 'आशा तृष्णादिशोः प्रोक्ता' इति विश्वः। अर्धचन्द्र इव मुखं येषां तैः [**अर्धचन्द्रमुखैः**] **बाणैः** कदलीवत्सुखं यथा तथा [**कदलीसुखम्**] **चिच्छेद**। अथ वा कदल्यामिव सुखमक्लेशो यस्मिन्कर्मणि तदिति विग्रहः॥

**अमोघं संदधे चास्मै धनुष्येकधनुर्धरः।**
**ब्राह्ममस्त्रं प्रियाशोकशल्यनिष्कर्षणौषधम्॥ ९७॥**

एकोऽद्वितीयो धनुर्धरः [**एकधनुर्धरः**] रामः। प्रियायाः शोक एव शल्यं तस्य निष्कर्षणमुद्धारकं यदौषधं तत् [**प्रियाशोकशल्यनिष्कर्षणौषधम्**] **अमोघं ब्राह्मं** ब्रह्मदेवताकम् **अस्त्रम्** अभिमन्त्रितं बाणम् **अस्मै** रावणाय **च**। तद्वधार्थमित्यर्थः। **धनुषि संदधे**॥

---

१ 'परं. २ कार्यन्तो हि देवानां विरोधो न जातिकृत इति शाश्वतिके वैराभावे नैकवद्भावः। तथा न्यासकृत्-शाश्वतिको नित्य इति। शश्वदिति त्रैकाल्यमुच्यते। तत्र भावः शाश्वतिक इति हे०। ३ गदां; शक्तिं;-स्वनातुर्व. ४ सुरद्विषः. ५ कदलीमिव इ० पा०, ६ रामः, चासौ. ७ अत्र भारते-ततः सुपत्रं सुमुखं हेमपुङ्खं शरोत्तमम्। तूणादादाय काकुत्स्थो ब्रह्मास्त्रेण युयोज ह॥ तं बाणवर्यं रामेण ब्रह्मास्त्रेणानुमन्त्रितम्। जहृषुर्देवगन्धर्वा दृष्ट्वा शक्रपुरोगमाः॥ इति।

तद्व्योम्नि शतधा भिन्नं ददृशे दीप्तिमन्मुखम् ।
वपुर्महोरगस्येव करालफणमण्डलम् ॥ ९८ ॥

व्योम्नि शतधा भिन्नं प्रसृतं दीप्तिमन्ति मुखानि यस्य [ दीप्तिमन्मुखम् ] तद् अस्त्रम् । [ करालफणमण्डलम् ] करालं भीषणं तुङ्गं वा फणमण्डलं यस्य तत्तथोक्तम् । 'करालो दन्तुरे तुङ्गे करालो भीषणेऽपि च' इति विश्वः । महोरगस्य शेषस्य वपुः इव । ददृशे दृष्टम् ॥

तेन मन्त्रप्रयुक्तेन निमेषार्धादपातयत् ।
स रावणशिरःपङ्क्तिमज्ञातव्रणवेदनाम् ॥ ९९ ॥

स रामः मन्त्रप्रयुक्तेन तेन अस्त्रेण अज्ञातव्रणवेदनाम् अतिशैत्यादननुभूतव्रणदुःखां रावणशिरःपङ्क्तिं निमेषार्धाद् अपातयत् पातयामास ॥

बालार्कप्रतिमेवाप्सु वीचिभिन्ना पतिष्यतः ।
रराज रक्षःकायस्य कण्ठच्छेदपरंपरा ॥ १०० ॥

पतिष्यतः आसन्नपातस्य रक्षःकायस्य रावणकलेवरस्य । छिद्यन्त इति छेदाः खण्डाः कण्ठानां ये छेदास्तेषां परंपरा पङ्क्तिः [ कण्ठच्छेदपरंपरा ] । वीचिभिर्भिन्ना नानाकृता [ वीचिभिन्ना ] अप्सु बालार्कस्य प्रतिमा प्रतिबिम्बं [ बालार्कप्रतिमा ] इव रराज । अर्कस्य बालविशेषणमारुण्यसिद्ध्यर्थमिति भावः ॥

मरुतां पश्यतां तस्य शिरांसि पतितान्यपि ।
मनो नातिविशश्वास पुनःसंधानशङ्किनाम् ॥ १०१ ॥

पतितानि तस्य रावणस्य शिरांसि पश्यतामपि पुनःसंधानशङ्किनाम् । पूर्वं तथादर्शनादिति भावः । मरुताम् अमराणाम् । 'मरुतौ पवनामरौ' इत्यमरः । मनः न अतिविशश्वास अतिविश्वासं न प्राप ॥

अथ मदगुरुपक्षैर्लोकपालद्विपाना-
मनुगतमलिवृन्दैर्गण्डभित्तीर्विहाय ।
उपनतमणिबन्धे मूर्ध्नि पौलस्त्यशत्रोः
सुरभि सुरविमुक्तं पुष्पवर्षं पपात ॥ १०२ ॥

अथ मदेन गजगण्डसंचारसंक्रान्तेन गुरुपक्षैः [ मदगुरुपक्षैः ] अलिवृन्दैः लोकपालद्विपानाम् ऐरावतादीनां गगनवर्तिनां गण्डभित्तीर्विहाय अनुगतम् अनुद्रुतं सुरभि सुगन्धि । 'सुरभिश्चम्पके स्वर्णे जातीफलवसन्तयोः । गन्धोपले सौरभेय्यां सल्लकीमातृभेदयोः । सुगन्धौ च मनोज्ञे च वाच्यवत्सुरभि स्मृतम् ॥' इति विश्वः । सुरविमुक्तं पुष्पवर्षम् । उपनत आसन्नो मणिबन्धो राज्याभिषेकसमये भावी यस्य तस्मिन् [ उपनतमणिबन्धे ]

१ दशधा. २ 'अज्ञातपत्' इ० पा०. ३ पूर्वदिनयुद्धे कृत्तानां शिरसां पुनरुत्पत्तिदर्शनात् । तथा च रामायणे—संधाय धनुषा रामः शरमाशीविषोपमम् ॥ रावणस्य शिरोऽच्छिन्दच्छ्रीमज्ज्वलितकुण्डलम् । *** तस्यैव सदृशं चान्यद्रावणस्योत्थितं शिरः । द्वितीयं रावणशिरश्छिन्नं संयति सायकैः ॥ छिन्नमात्रं च तच्छीर्षं पुनरेव प्रदृश्यते ॥ *** एवमेव शतं छिन्नं शिरसां तुल्यवर्चसाम् । इ० युद्ध० स० १०७, ५३-५७. ४ 'गर्भभिन्नीः' इ० पा०. ५ सौम्यातिशयादिति भावः.

**पौलस्त्यशत्रोः** रामस्य । **मूर्ध्नि पपात** । इदमेव राज्याभिषेकसूचकमिति भावः ॥

**यन्ता हरेः सपदि संहृतकार्मुकज्य-**
**मापृच्छ्य राघवमनुष्ठितदेवकार्यम् ।**
**नामाङ्करावणशराङ्कितकेतुयष्टि-**
**मूर्ध्वं रथं हरिसहस्रयुजं निनाय ॥ १०३ ॥**

**हरेः** इन्द्रस्य **यन्ता** मातलिः **सपदि संहृतकार्मुकज्यम्** । अनुष्ठितं देवकार्यं रावणवधरूपं येन तं [ **अनुष्ठितदेवकार्यं** ] **राघवमापृच्छ्य** साधु यामीत्यामन्त्र्य नामाङ्कैर्नामाक्षरचिह्नैः रावणशरैरङ्किता विहिता केतुयष्टिर्ध्वजदण्डो यस्य तं [ **नामाङ्करावणशराङ्कितकेतुयष्टिम्** ] । हरीणां वाजिनां सहस्रेण युज्यत इति हरिसहस्रयुक् । तं [ **हरिसहस्रयुजम्** ] । 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । हरिः' इत्युभयत्राप्यमरः । **रथम् ऊर्ध्वं निनाय** नीतवान् ॥

**रघुपतिरपि जातवेदोविशुद्धां प्रगृह्य प्रियां**
**प्रियसुहृदि विभीषणे संगमय्य श्रियं वैरिणः ।**
**रविसुतसहितेन तेनानुयातःससौमित्रिणा**
**भुजविजितविमानरत्नाधिरूढः प्रतस्थे पुरीम् ॥१०४॥**

**रघुपतिः अपि** जातवेदसमग्नौ विशुद्धां जातशुद्धिं [ **जातवेदोविशुद्धां** ] **प्रियां** सीतां **प्रगृह्य** स्वीकृत्य । **प्रियसुहृदि विभीषणे वैरिणः** रावणस्य **श्रियं** राज्यलक्ष्मीं **संगमय्य** संगतां कृत्वा । गमेर्ण्यन्ताल्ल्यप्प्रत्ययः । 'मितां ह्रस्वः' इति ह्रस्वः । 'ल्यपि लघुपूर्वात्' इति णेरयादेशः । **रविसुतसहितेन** सुग्रीवयुक्तेन **ससौमित्रिणा** सलक्ष्मणेन **तेन** विभीषणेन **अनुयातः** अनुगतः सन् । विमानं रत्नमिव विमानरत्नमित्युपमितसमासः । भुजविजितं यद्विमानरत्नं पुष्पकं तदारूढः सन् [ **भुजविजितविमानरत्नाधिरूढः** ] **पुरीम्** अयोध्यां **प्रतस्थे** । 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् । अत्र प्रस्थानक्रियाया अकर्मकत्वेऽपि तदङ्गभूतदेशक्रियापेक्षया सकर्मकत्वम् । अस्ति च धातूनां क्रियान्तरोपसर्जनकस्वार्थाभिधायकत्वम् । यथा 'कुसूलान्पचति' इत्यादावादानक्रियागर्भः पाको विधीयत इति ॥

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया
व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये
**रावणवधः** नाम द्वादशः सर्गः ॥

---

१ 'युतम्' इ०. २ संहृता अवरोपिता । कार्मुके आरोपिता ज्या कार्मुकज्या । धनुःश्रुतिरारूढप्रतिपत्त्यै इति वामनः । यथा—धनुर्ज्याकिणचिह्नेन दोष्णा विस्फारितं त्वया इति ६. हेमाद्रिः । ३ 'संक्रमय्य' इ० पा०. ४ अत्र निरुक्तं—जातवेदाः कस्माज्जातानि वेद जातानि वैनं विदुः । जाते जाते विद्यते इति वा । जातवित्तो वा जातधनो जातविद्यो वा जातप्रज्ञानो यत्तज्जातः पशूनविन्दतेति तज्जातवेदसो जातवेदस्त्वमिति ब्राह्मणम् । इति ।

# त्रयोदशः सर्गः ।

त्रैलोक्यशल्योद्धरणाय सिन्धोश्चकार बन्धं मरणं रिपूणाम्[1] ।
पुण्यप्रणामं भुवनाभिरामं रामं विरामं विपदामुपासे ॥

अथात्मनः शब्दगुणं गुणज्ञः पदं विमानेन विगाहमानः ।
रत्नाकरं वीक्ष्य मिथः स जायां रामाभिधानो हरिरित्युवाच ॥ १ ॥

**अथ** प्रस्थानानन्तरम् । जानातीति ज्ञः । 'इगुपध–' इत्यादिना कप्रत्ययः । गुणानां ज्ञः **गुणज्ञः** । रत्नाकरादिवर्ण्यैश्वर्यगुणाभिज्ञ इत्यर्थः । **स रामाभिधानः हरिः** विष्णुः । शब्दो गुणो यस्य तत् **शब्दगुणम् आत्मनः** स्वस्य **पदं** विष्णुपदम् । आकाशमित्यर्थः । 'वियद्विष्णुपदम्' इत्यमरः । 'शब्दगुणमाकाशम्' इति तार्किकाः । **विमानेन** पुष्पकेण **विगाहमानः** सन् । **रत्नाकर वीक्ष्य मिथः** रहसि । 'मिथोऽन्योन्यं रहस्यपि' इत्यमरः । **जायां** पत्नीं सीताम् **इति** वक्ष्यमाणप्रकारेण **उवाच** । रामस्य हरिरित्यभिधानं निरङ्कुशमहिमद्योतनार्थम् । मिथोग्रहणं गोष्ठीविश्रम्भसूचनार्थम् ॥

वैदेहि पश्या मलयाद्विभक्तं मत्सेतुना फेनिलमम्बुराशिम् ।
छायापथेनेव शरत्प्रसन्नमाकाशमाविष्कृतचारुतारम् ॥ २ ॥

हे **वैदेहि** सीते **आ मलयाद्** मलयपर्यन्तम् । 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी । पदद्वयं चैतत् । **मत्सेतुना विभक्तं** द्विधाकृतम् । अत्यायतसेतुनेत्यर्थः । दर्पाधिक्याच्च मद्ग्रहणम् । **फेनिलं** फेनवन्तम् । 'फेनादिलच्च' इतीलच्प्रत्ययः । क्षिप्रकारी चायमिति भावः । **अम्बुराशिम्** । **छायापथेन** विभक्तं **शरत्प्रसन्नम् आविष्कृतचारुतारम् आकाशम् इव** । **पश्य** । *मम महानयं प्रयासस्त्वदर्थं इति हृदयम्* । छायापथो नाम ज्योतिश्चक्रमध्यवर्ती कश्चित्तिरश्चीनोऽवकाशः[3] ॥

गुरोर्यियक्षोः कपिलेन मेध्ये रसातलं संक्रमिते तुरंगे ।
तदर्थमुर्वीमवदारयद्भिः पूर्वैः किलायं परिवर्धितो नः ॥ ३ ॥

**यियक्षोः** यष्टुमिच्छोः । यजेः सन्नन्तादुप्रत्ययः । **गुरोः** सगरस्य **मेध्ये** अश्वमेधार्हे **तुरंगे** हये **कपिलेन** मुनिना **रसातलं** पातालं **संक्रमिते** सति । **तदर्थम् उर्वीम् अवदारयद्भिः** खनद्भिः **नः** अस्माकं **पूर्वैः** वृद्धैः सगरसुतैः **अयं** समुद्रः **परिवर्धितः किल** । किलेत्यैतिह्ये । अतो नः पूज्य इति भावः । यद्यपि तुरंगहारी शतक्रतुस्तथापि तस्य कपिलसमीपे दर्शनात्स एवेति तेषां भ्रान्तिः । तन्मत्यैव कविना कपिलेनेति निर्दिष्टम्[4] ॥

---

१ त्रैलोक्यशल्यं रावणरूपम् । पुण्यः प्रणामो यस्मै । विपदां विरामं विनाशकम् । राममुपासे इत्यन्वयः । २ मापूरितमुद्र०. ३ 'शरदृतन्तादिकाले वियदन्तः [ नभोमध्ये ] प्रणाल्याकारो दण्डायमानो निर्मुधोऽवकाशविशेषः छायापथः ।' इ० चा० दि०. ४ अत्र रामायणम्–ततस्तेऽथ विधिवर्षं पुत्रका भद्रमस्तु वः । समुद्रमालिनीं सर्वां पृथिवीमनुगच्छत । एकैकं योजनं पुत्रा विस्तारमभिगच्छत । यावत्तुरगसंदर्शनात्तावत्खनत मेदिनीम् । तमेव हयहर्तारं मार्गमाणा ममाज्ञया ॥ इति ।

**पक्षच्छिदा गोत्रभिदा** इन्द्रेण । उभयत्र 'सत्सूद्विष-' इत्यादिना क्विप् । **आत्तगन्धाः** हृतगर्वाः । अभिभूता इत्यर्थः । 'गन्धो गन्धक आमोदे लेशे संबन्धगर्वयोः ।' इति विश्वः । 'आत्तगन्धोऽभिभूतः स्यात्' इत्यमरः । महीं धारयन्तीति **महीध्राः** पर्वताः । मूलविभुजादित्वात्कप्रत्ययः । शतं शतं **शतशः शरण्यं** रक्षणसमर्थम् **एनं** समुद्रम् । **परेभ्यः** शत्रुभ्यः **उपप्लविनः** भयवन्तः **नृपाः धर्मोत्तरम्** धर्मप्रधानं **मध्यमं** मध्यमभूपालम् **इव** । **आश्रयन्ते** । 'अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः' इति कामन्दकः । आर्तबन्धुरिति भावः ॥

**रसातलादादिभवेन पुंसा भुवः प्रयुक्तोद्वहनक्रियायाः ।**
**अस्याच्छमम्भः प्रलयप्रवृद्धं मुहूर्तवक्त्राभरणं[2] बभूव ॥ ८ ॥**

**आदिभवेन पुंसा** आदिवराहेण **रसातलात्प्रयुक्तोद्वहनक्रियायाः** कृतोद्धरणक्रियायाः । विवाहक्रिया च व्यज्यते । **भुवः** भूदेवतायाः प्रलये प्रवृद्धं [ **प्रलयप्रवृद्धम्** ] **अस्य** अब्धेः **अच्छमम्भः** मुहूर्तं वक्त्रावरणं लज्जारक्षणार्थं मुखावगुण्ठनं [ **मुहूर्तवक्त्रावरणं** ] **बभूव** । तदुक्तम्—'उद्धृतासि वराहेण कृष्णेन शतबाहुना' इति ॥

**मुखार्पणेषु प्रकृतिप्रगल्भाः स्वयं तरंगाधरदानदक्षः ।**
**अनन्यसामान्यकलत्रवृत्तिः पिबत्यसौ पाययते च सिन्धूः ॥ ९ ॥**

[ **अनन्यसामान्यकलत्रवृत्तिः** ] अन्येषां पुंसां सामान्या साधारणा न भवतीत्यनन्यसामान्या कलत्रेषु वृत्तिर्भोगरूपा यस्य स तथोक्तः । इममेवार्थं प्रतिपादयति—तरंग एवाधरस्तस्य दाने समर्पणे दक्षश्चतुरः [ **तरंगाधरदानदक्षः** ] **असौ** समुद्रः **मुखार्पणेषु** प्रकृत्या सख्यादिप्रेरणं विना प्रगल्भा धृष्टाः [ **प्रकृतिप्रगल्भाः** ] **सिन्धूः** नदीः । 'सिन्धुः समुद्रे नद्यां च' इति विश्वः । **स्वयं पिबति पाययते च** . तरंगाधरमिति शेषः । 'न पादम्याङ्यम-' इत्यादिना पिबतेर्ण्यन्तान्नित्यं परस्मैपदनिषेधः । 'गतिबुद्धिप्रत्यवसानार्थ-' इत्यादिना सिन्धूनां कर्मत्वम् । दंपत्योर्युगपत्परस्पराधरपानमनन्यसाधारणमिति भावः ॥

**ससत्त्वमादाय नदीमुखाम्भः[4] संमीलयन्तो विवृताननत्वात्[5] ।**
**अमी शिरोभिस्तिमयः सरन्ध्रैरूर्ध्वं वितन्वन्ति जलप्रवाहान्[6] ॥ १० ॥**

**अमी तिमयः** मत्स्यविशेषाः । तदुक्तम्—'अस्ति मत्स्यस्तिमिर्नाम शतयोजनमायतः । [ तिमिंगिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति राघवः ॥ ] ' इति । **विवृताननत्वात्** व्यात्तमुखत्वाद्धेतोः । आननानि विवृत्येत्यर्थः । **ससत्त्वं** मत्स्यादिप्राणिसहितं **नदीमुखाम्भः**

१ अत्र रामायणम्—पूर्वं कृतयुगे तात पर्वताः पक्षिणोऽभवन् । तेऽपि जग्मुर्दिशः सर्वा गरुडा इव वेगिनः । ततस्तेषु प्रयातेषु देवसंघा महर्षिभिः । भूतानि च भयं जग्मुस्तेषां पतनशङ्कया ॥ ततः क्रुद्धः सहस्राक्षः पर्वतानां शतक्रतुः । पक्षांश्चिच्छेद वज्रेण ततः शतसहस्रशः ॥ इति सुन्द०. का. १-११५-११९ २ 'भरणम्' इ० पा०; 'अस्याब्धेः प्रलये प्रवृद्धमत एव पार्थिवपरमाण्वादीनामधःपातादच्छं निर्मलम् । वक्त्रावरणमिति पाठे वक्त्रतिरोधानम् । तस्मिन्पाठे यथा पुंसा कृतपाणिग्रहणक्रियायाः कन्या विवाहकाले सूक्ष्मवाससा मुखावगुंठनं भवतीति व्यङ्ग्योऽर्थः । इ० दिनकर० । ३ अत्र विष्णुपुराणम्—ततः समुत्क्षिप्य धरां स्वदंष्ट्रया महावराहः स्फुटपद्मलोचनः । रसातलादुत्पलपत्रसंनिभः समुत्थितो नील इवाचलो महान् ॥ इति । ४ 'सरिन्मुखाम्भः' इ०. ५ ०ननत्वम्, ६ 'सलिलप्रवाहान्' इ० पा०

आदाय संमीलयन्तः चञ्चुपुटानि संघट्टयन्तः सन्तः सरन्ध्रैः शिरोभिः जलप्रवाहान् ऊर्ध्वं वितन्वन्ति । जलयन्त्रक्रीडासमाधिर्व्यज्यते ॥

मातंगनक्रैः सहसोत्पतद्भिर्भिन्नान्द्विधा पश्य समुद्रफेनान् ।
कपोलसंसर्पितया य एषां व्रजन्ति कर्णक्षणचामरत्वम् ॥ ११ ॥

सहसोत्पतद्भिर्मातंगनक्रैः मातंगाकारैर्ग्राहैः द्विधा भिन्नान्समुद्रफेनान्पश्य । ये फेनाः एषां जलमातंगनक्राणां कपोलेषु संसर्पितया संसर्पणेन [ कपोलसंसर्पितया ] हेतुना कर्णेषु क्षणं चामरत्वं [ कर्णक्षणचामरत्वं ] व्रजन्ति ॥

वेलानिलाय प्रसृता भुजंगा महोर्मिविस्फूर्जथुनिर्विशेषाः ।
सूर्यांशुसंपर्कसमृद्धरागैर्व्यज्यन्त एते मणिभिः फणस्थैः ॥ १२ ॥

वेलानिलाय । वेलानिलं पातुमित्यर्थः 'क्रियार्थोपपद–' इत्यादिना चतुर्थी । प्रसृताः निर्गता महोर्मीणां विस्फूर्जथुरुद्रेकः । 'द्वितोऽथुच्' इत्यथुच्प्रत्ययः । तस्मान्निर्विशेषा दुर्ग्रहभेदाः [ महोर्मिविस्फूर्जथुनिर्विशेषाः ] । एते भुजंगाः सूर्यांशुसंपर्केण समृद्धरागैः प्रवृद्धकान्तिभिः [ सूर्यांशुसंपर्कसमृद्धरागैः ] फणस्थैः मणिभिः व्यज्यन्ते उन्नीयन्ते ॥

तवाधरस्पर्धिषु विद्रुमेषु पर्यस्तमेतत्सहसोर्मिवेगात् ।
ऊर्ध्वाङ्कुरप्रोतमुखं कथंचित्क्लेशादपक्रामति शङ्खयूथम् ॥ १३ ॥

तवाधरस्पर्धिषु । अधरसदृशेष्वित्यर्थः । विद्रुमेषु प्रवालेषु सहसा ऊर्मिवेगात्पर्यस्तं प्रक्षिप्तमूर्ध्वाङ्कुरैर्विद्रुमप्ररोहैः प्रोतमुखं स्यूतवदनम् [ ऊर्ध्वाङ्कुरप्रोतमुखम् ] एतत् [ शङ्खयूथम् ] शङ्खानां यूथं वृन्दं कथंचित्क्लेशाद् अपक्रामति । विलम्ब्यापसरतीत्यर्थः ॥

प्रवृत्तमात्रेण पयांसि पातुमावर्तवेगाद्भ्रमता घनेन ।
आभाति भूयिष्ठमयं समुद्रः प्रमथ्यमानो गिरिणेव भूयः ॥ १४ ॥

पयांसि पातुं प्रवृत्त एव प्रवृत्तमात्रो न तु पीतवांस्तेन [ प्रवृत्तमात्रेण ] आवर्तवेगात् । 'स्यादावर्तोऽम्भसां भ्रमः' इत्यमरः । भ्रमता घनेन अयं समुद्रः भूयः पुनरपि गिरिणा मन्दरेण प्रमथ्यमानः इव भूयिष्ठम् अत्यन्तम् आभाति ॥

---

१ मुखसंकोचात्सहसा न निर्गमात् इति भावः । २ कर्णे. ३ विस्फूर्जित इ० । ४ समृद्ध, समिद्ध० इ० पा० । ५ अस्य समानार्थं पद्यं–दिङ्नागहस्ताकृतिमुद्वहद्भिर्भोगैः प्रशस्तासितरत्ननालैः । रराज सर्पावलिरुल्लसन्ती तरङ्गमालेव नभोर्णवस्य ॥ इति । ६ कृच्छ्रात्, अपाक्रा०. ७ ऊर्ध्वाङ्कुरपु प्रोत०. ८ इन इ पा० । ९ 'मन्थानं मन्दरं कृत्वा तथा नेत्रं च वासुकिम् । देवा मथितुमारब्धाः समुद्रं निधिमम्भसाम् ॥ १० भारतम् । ततो निश्चित्य मथनं योक्त्रं कृत्वा च वासुकिम् । मन्थानं मन्दरं कृत्वा ममन्थुरमितौजसः ॥ इति रामायणम् । विशेषस्तु रा० बालकाण्डे ४५ सर्गे द्रष्टव्यः ।

दूरादयश्चक्रनिभस्य तन्वी तमालतालीवनराजिनीला ।
आभाति वेला लवणाम्बुराशेर्धारानिबद्धेव कलङ्करेखा ॥ १५ ॥

अयश्चक्रनिभस्य लवणाम्बुराशेः दूरात् तन्वी अणुत्वेनावभासमाना तमालतालीवनराजिभिर्नीला [ तमालतालीवनराजिनीला ] वेला तीरभूमिः धारानिबद्धा चक्राश्रिता कलङ्करेखा मालिन्यरेखा इव । आभाति । 'मालिन्यरेखां तु कलङ्कमाहुः' इति दण्डी ॥

वेलानिलः केतकरेणुभिस्ते संभावयत्याननमायताक्षि ।
मामक्षमं मण्डनकालहानेर्वेत्तीव बिम्बाधरबद्धतृष्णम् ॥ १६ ॥

हे आयताक्षि । 'वेला स्यात्तीरनीरयोः' इति विश्वः । वेलानिलः केतकरेणुभिः ते आननं संभावयति । किमर्थमित्यत्रेत्याशयामुत्प्रेक्षते—बिम्बाधरे बद्धतृष्णं [ बिम्बाधरबद्धतृष्णं ] मां मण्डनेनाभरणक्रियया कालहानिर्विलम्बस्तस्याः [ मण्डनकालहानेः ] अक्षमम् असहमानम् । कर्मणि षष्ठी । कालहानिमसहमानं वेत्ति इव वेत्ति किम् । नो चेत्कथं संभावयेदित्यर्थः ॥

एते वयं सैकतभिन्नशुक्तिपर्यस्तमुक्तापटलं पयोधेः ।
प्राप्ता मुहूर्तेन विमानवेगात्कूलं फलावर्जितपूगमालम् ॥ १७ ॥

एते वयं [ सैकतभिन्नशुक्तिपर्यस्तमुक्तापटलं ] सैकतेषु भिन्नाभिः स्फुटिताभिः शुक्तिभिः पर्यस्तानि परितः क्षिप्तानि मुक्तानां पटलानि यस्मिंस्तत्तथोक्तम् । फलैरावर्जिता आनमिताः पूगमाला यस्मिंस्तत् [ फलावर्जितपूगमालम् ] पयोधेः कूलं विमानवेगान्मुहूर्तेन प्राप्ताः ॥

कुरुष्व तावत्करभोरु पश्चान्मार्गे मृगप्रेक्षिणि दृष्टिपातम् ।
एषा विदूरीभवतः समुद्रात्सकानना निष्पततीव भूमिः ॥ १८ ॥

'मणिबन्धादा कनिष्ठं करस्य करभो बहिः' इत्यमरः । करभ इवोरू यस्याः सा करभोरूः । 'ऊरूत्तरपदादौपम्ये' इत्यूङ् । तस्याः संबुद्धिर्हे करभोरु । मृगवत्प्रेक्षत इति विग्रहः । हे मृगप्रेक्षिणि तावत्पश्चान्मार्गे लङ्घिताध्वनि दृष्टिपातं कुरुष्व । एषा सकानना भूमिर्विदूरीभवतः समुद्रान्निष्पतति निष्क्रामति इव । विदूरशब्दाद्विदूरोऽभ्यनिधित् च्विः ॥

क्वचित्पथा संचरते सुराणां क्वचिद्घनानां पततां क्वचिच्च ।
यथाविधो मे मनसोऽभिलाषः प्रवर्तते पश्य तथा विमानम् ॥ १९ ॥

१ दूरादयश्च० विभाति. २ अस्मात्परमिदमतिरिक्तं पद्यं क्वचित्—निर्त्रिंशकल्पस्य निधेर्जलानामेषा तमालद्रुमराजिनीला । दूरादयश्चक्रनिभस्य विभाति वेला कलङ्कलेखामलिनेव धारा ॥ ३ आयताक्षम् इ. पा०. ४ वृद्ध. ५ बिम्बकारो बिम्बतुल्यो वाऽधरः बिम्बाधरः इ. शाकपार्थिवादिः । तथा च वामनः—'बिम्बाधर इति वृत्तौ मध्यमपदलोपः स्यात्' इति । अन्यथा अधरबिम्ब इति स्यात् । ६ कुङ्कुमादिना त्वया क्रियमाणस्य मण्डनस्य कालहानेः इति पा० टि० रो० । ७ पुरो हि इ० पुरः पुरोगमनेन इति पा० । ८ 'निःसरति' इ. पा० । अनुरूपभावः शाकुन्तले—शैलानामवरोहतीव शिखरादुन्मज्जतां मेदिनी । इति । ९ मृग० इति साभिप्रायम् । मृगो हि पश्चात्पश्यति । इति हे०. १० महताम् इ. पा.

हे देवि विमानं पुष्पकं मे मनसः अभिलाषः यथाविधः तथा प्रवर्तते पश्य । क्वचित्सुराणां पथा संचरते । क्वचिद् घनानां क्वचित् पततां पक्षिणां च पथा संचरते । 'समस्तृतीयायुक्तात्' इति संपूर्वाच्चरतेरात्मनेपदम् ॥

असौ महेन्द्रद्विपदानगन्धिस्त्रिमार्गगावीचिविमर्दशीतः ।
आकाशवायुर्दिनयौवनोत्थानाचामति स्वेदलवान्मुखे ते ॥ २० ॥

महेन्द्रद्विपदानगन्धिः ऐरावतमदगन्धिः । त्रिभिर्मार्गैर्गच्छतीति त्रिमार्गगा गङ्गा । 'तद्धितार्थ-' इत्यादिनोत्तरपदसमासः । तस्या वीचीनां विमर्देन संपर्केण शीतः [ त्रिमार्गगावीचिविमर्दशीतः ] असौ आकाशवायुः दिनयौवनोत्थान् मध्याह्नसंभवान् ते मुखे स्वेदलवान् आचामति हरति । अनेन सुरपथसंचारो दर्शितः ॥

करेण वातायनलम्बितेन स्पृष्टस्त्वया चण्डि कुतूहलिन्या ।
आमुञ्चतीवाभरणं द्वितीयमुद्भिन्नविद्युद्वलयो घनस्ते ॥ २१ ॥

हे चण्डि कोपने । 'चण्डस्त्वत्यन्तकोपनः' इत्यमरः । कुतूहलिन्या विनोदार्थिन्या त्वया कर्त्र्या वातायने गवाक्षे लम्बितेनावसंसितेन [ वातायनलम्बितेन ] करेण स्पृष्टः उद्भिन्नविद्युद्वलयः घनस्ते द्वितीयम् आभरणं वलयम् आमुञ्चति इव अर्पयतीव । चण्डीत्यनेन कोपनशीला चाद्भीतः क्षिप्रं त्वां मुञ्चति मेघ इति व्यज्यते ॥

अमी जनस्थानमपोढविघ्नं मत्वा समारब्धनवोटजानि ।
अध्यासते चीरभृतो यथास्वं चिरोज्झितान्याश्रममण्डलानि ॥ २२ ॥

अमी चीरभृतः तापसाः जनस्थानम् अपोढविघ्नम् अपास्तविघ्नं मत्वा ज्ञात्वा समारब्धा नवा उटजाः पर्णशाला येषु तानि [ समारब्धनवोटजानि ] । 'पर्णशालोटजोऽस्त्रियाम्' इत्यमरः । चिरोज्झितानि । राक्षसभयादित्यर्थः । आश्रममण्डलानि आश्रमविभागान् यथास्वं स्वमनतिक्रम्य अध्यासते अधितिष्ठन्ति ॥

सैषा स्थली यत्र विचिन्वता त्वां भ्रष्टं मया नूपुरमेकमुर्व्याम् ।
अदृश्यत त्वच्चरणारविन्दविश्लेषदुःखादिव बद्धमौनम् ॥ २३ ॥

सा पूर्वानुभूता स्थली एषा । दृश्यत इत्यर्थः । यत्र स्थल्यां त्वां विचिन्वता अन्विष्यता मया । त्वच्चरणारविन्देन यो विश्लेषो वियोगस्तेन यद्दुःखं तस्मात् [ त्वच्चरणारविन्दविश्लेषदुःखाद् ] इव बद्धमौनं निःशब्दम् । उर्व्यां भ्रष्टम् एकं नूपुरं मञ्जीरः । 'मञ्जीरो नूपुरोऽस्त्रियाम्' इत्यमरः । अदृश्यत दृष्टम् । हेतूत्प्रेक्षा ॥

---

१ देवानामूर्ध्वः पन्थास्तदधो वातानां तदधो मेघानां तदधः पक्षिणामिति क्रमः । २ सुरेन्द्र इ., गन्धी इ. पा० । ३ निःसृतेन इ. पा० । ४ अत्र दुःखरूपो गुणो हेतुत्वेनोत्प्रेक्षितः इ. हेतूत्प्रेक्षा । 'विना द्रव्यं त्रिधा सर्वाः स्वरूपफलहेतुगाः ।' इ. सा. दर्प. । अस्मिन् श्लोके कालिदासकविः इष्टदेवतमन्त्रं न्यक्षिपदिति संप्रदायः । स च हंसपर्यायवाचित्वात् 'हंसः' इति ज्ञेयः । इति चारि० । दिनकरोऽप्येवम् ।

त्वं रक्षसा भीरु यतोऽपनीता तं मार्गमेताः कृपया लता मे ।
अदर्शयन्वक्तुमशक्नुवत्यः शाखाभिरावर्जितपल्लवाभिः ॥ २४ ॥

हे भीरु भयशीले । ' ऊङुतः ' इत्यूङ् । ततो नदीत्वात्संबुद्धौ ह्रस्वः । त्वं रक्षसा रावणेन यतः येन मार्गेण । सार्वविभक्तिकस्तसिः । अपनीता अपहृता तं मार्गं वागिन्द्रियाभावाद् वक्तुम् अशक्नुवत्यः एताः लताः मोरुय आवर्जिता नमिताः पल्लवाः पाणिस्थानीया याभिस्ताभिः [ आवर्जितपल्लवाभिः ] शाखाभिः स्वावयवभूताभिः कृपया मे अदर्शयन् । हस्तचेष्टयाऽसूचयन्नित्यर्थः । ' शाखा वृक्षान्तरे भुजे ' इति विश्वः । लतादीनामपि ज्ञानमस्त्येव । तदुक्तं मनुना– 'अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः । ' इति ॥

मृग्यश्च दर्भाङ्कुरनिर्व्यपेक्षास्तवागतिज्ञं समबोधयन्माम् ।
व्यापारयन्त्यो दिशि दक्षिणस्यामुत्पक्ष्मराजीनि विलोचनानि ॥ २५॥

दर्भाङ्कुरेषु भक्ष्येषु निर्व्यपेक्षा निःस्पृहाः [ दर्भाङ्कुरनिर्व्यपेक्षाः ] मृग्यः मृगाङ्गनाः च उत्पक्ष्मराजीनि विलोचनानि दक्षिणस्यां दिशि व्यापारयन्त्यः प्रवर्तयन्त्यः सत्यः तव अगतिज्ञं गत्यनभिज्ञं मां समबोधयन् । दृष्टिचेष्टया त्वद्गतिमबोधयन्नित्यर्थः ॥

एतद्गिरेर्माल्यवतः पुरस्तादाविर्भवत्यम्बरलेखि शृङ्गम् ।
नवं पयो यत्र घनैर्मया च त्वद्विप्रयोगाश्रु समं विसृष्टम् ॥ २६ ॥

माल्यवतः नाम गिरेः अम्बरलेखि अभ्रंकषं शृङ्गम् एतत्पुरस्तात् अग्रे आविर्भवति यत्र शृङ्गे घनैः मेघैः नवं पयः मया त्वद्विप्रयोगेन यदश्रु तत् [ त्वद्विप्रयोगाश्रु ] च समं युगपद् विसृष्टम् । मेघदर्शनाद्वर्षतुल्यमश्रु विमुक्तमिति भावः ॥

गन्धश्च धाराहतपल्वलानां कादम्बमर्धोद्गतकेसरं च ।
स्निग्धाश्च केकाः शिखिनां बभूवुर्यस्मिन्नसह्यानि विना त्वया मे ॥ २७ ॥

यस्मिन् शृङ्गे धाराभिर्वर्षधाराभिराहतानां पल्वलानां [ धाराहतपल्वलानां ] गन्धः च । अर्धोद्गतकेसरं कादम्बं नीपकुसुमं च । स्निग्धाः मधुराः शिखिनां बर्हिणाम् । ' शिखिनौ वह्निबर्हिणौ ' इत्यमरः । केकाः च । त्वया विना मे असह्यानि बभूवुः । ' नपुंसकमनपुंसकेन– ' इति नपुंसकैकशेषः ॥

---

१ राजीनि. २ अत्र रामायणम्—एते महामृगा वीर मामीक्षन्ते पुनः पुनः। वक्तुकामा इव हि मे इङ्गितान्युपलक्षये ॥...एवमुक्ता नरेन्द्रेण ते मृगाः सहसोत्थिताः । दक्षिणाभिमुखाः सर्वे दर्शयन्तो नभःस्थलम् ॥ मैथिली ह्रियमाणा सा दिशं यामभ्यपद्यत । तेन मार्गेण गच्छन्तो निरीक्षन्ते पुनः पुनः ॥ अरण्य. ६४ ३ •लेढि. ४ घनं सान्द्र ५ विमुक्तम्' 'इ॰ पा॰ । उद्दीपकस्य मेघस्य दर्शनादिति भाव. । 'मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे । इ॰ मेघदूतम् । ६ पल्लवानाम् इ॰, अर्धोद्गत– अर्धोदित इ॰ पा. ७ ' अभुवन् ' इति; त्वया मे यस्मिन् विना दुःसहान्यभूवन् इ॰ च पा॰.

पूर्वानुभूतं स्मरता च यत्र कम्पोत्तरं भीरु तवोपगूढम् ।
गुहाविसारीण्यतिवाहितानि मया कथंचिद्घनगर्जितानि ॥ २८ ॥

किं च । हे भीरु यत्र शृङ्गे पूर्वानुभूतं कम्पोत्तरं कम्पप्रधानं तव उपगूढम् उपगूहनं स्मरता मया गुहाविसारीणि घनगर्जितानि कथंचिद् अतिवाहितानि । स्मारकत्वेनोद्दीपकत्वात्क्लेशेन गमितानीत्यर्थः ॥

आसारसिक्तक्षितिबाष्पयोगान्मामक्षिणोद्यत्र विभिन्नकोशैः ।
विडम्ब्यमाना नवकन्दलैस्ते विवाहधूमारुणलोचनश्रीः ॥ २९ ॥

यत्र शृङ्गे विभिन्नकोशैः विकसितकुड्मलैः नवकन्दलैः कन्दलीपुष्पैरासारेण धारासंपातेन । 'धारासंपात आसारः' इत्यमरः । सिक्तायाः क्षितेर्बाष्पस्य धूमवर्णस्य योगाद्धेतोः [ आसारसिक्तक्षितिबाष्पयोगात् ] विडम्ब्यमाना अनुक्रियमाणा ते विवाहधूमेनारुणा लोचनश्रीः [ विवाहधूमारुणलोचनश्रीः ] । सादृश्यात्स्मर्यमाणेति शेषः । माम् अक्षिणोद् अपीडयत् ॥

उपान्तवानीरवनोपगूढान्यालक्ष्यपारिप्लवसारसानि ।
दूरावतीर्णा पिबतीव खेदादमूनि पम्पासलिलानि दृष्टिः ॥ ३० ॥

उपान्तवानीरवनोपगूढानि पार्श्ववञ्जुलवनच्छन्नान्यालक्ष्या ईषद्दृश्याः पारिप्लवाश्चलाः सारसा येषु तानि [ आलक्ष्यपारिप्लवसारसानि ] अमूनि पम्पासलिलानि पम्पासरोजलानि [ दूरावतीर्णा ] दूराद् अवतीर्णा मे दृष्टिः अत एव खेदात्पिबतीव । न विहातुमुत्सहत इत्यर्थः ॥

अत्रावियुक्तानि रथाङ्गनाम्नामन्योन्यदत्तोत्पलकेसराणि ।
द्वन्द्वानि दूरान्तरवर्तिना ते मया प्रिये सस्पृहमीक्षितानि ॥ ३१ ॥

अत्र पम्पासरस्यन्योन्यस्मै दत्तोत्पलकेसराणि [ अन्योन्यदत्तोत्पलकेसराणि ] अवियुक्तानि रथाङ्गनाम्नां द्वन्द्वानि चक्रवाकमिथुनानि । हे तव दूरान्तरवर्तिना दूरदेशवर्तिना मया हे प्रिये सस्पृहं साभिलाषम् ईक्षितानि । तदानीं त्वामस्मार्षमित्यर्थः ॥

इमां तटाशोकलतां च तन्वीं स्तनाभिरामस्तबकाभिनम्राम् ।
त्वत्प्राप्तिबुद्ध्या परिरब्धुकामः सौमित्रिणा सास्रमहं निषिद्धः ॥ ३२ ॥

किं च । स्तनवदभिरामाभ्यां स्तबकाभ्यामभिनम्रां [ स्तनाभिरामस्तबकाभिनम्राम् ] । तन्वीमिमां तटाशोकस्य लतां शाखां [ तटाशोकलतां ] अतः त्वत्प्राप्तिबुद्ध्या

---

१ रात्रो. २ च भि०. ३ धूमाकुल इ० पा० । अनुरूपो भावः विक्र०-आरक्तराजिभिरियं कुसुमैर्नवकन्दलैःसलिलगर्भैः । कोपादन्तर्बाष्पे स्मरयति मां लोचने तस्याः ॥ इति । ४ गृहोप०. ५ 'अन्यापि श्रान्ता जलं पिबति' इ० दि०. ६ एवं कुमारे-'अर्धोपभुक्तेन बिसेन जायां संभावयामास रथाङ्गनामा ।' इति । ७ 'अवनम्राम्' इ० पा०. ८ परिरिप्सुमानः सास्रं-सास्रुः; इ० पा०.

त्वमेव प्राप्तेति भ्रान्त्या परिरब्धुमालिङ्गितुं कामो यस्य सः [ परिरब्धुकामः ] अहं सौमित्रिणा लक्ष्मणेन सास्रं निषिद्धः । नेयं सीतेति निवारितः । परिरब्धुकाम इत्यत्र 'तुं काममनसोरपि' इति वचनान्मकारलोपः ॥

अमूर्विमानान्तरलम्बिनीनां श्रुत्वा स्वनं काञ्चनकिङ्किणीनाम् ।
प्रत्युद्व्रजन्तीव खमुत्पतन्त्यो गोदावरीसारसपङ्क्तयस्त्वाम् ॥ ३३ ॥

विमानस्यान्तरेष्ववकाशेषु लम्बन्ते यास्तासां [ विमानान्तरलम्बिनीनां ] काञ्चनकिङ्किणीनां स्वनं श्रुत्वा स्वयूथशब्दभ्रमात् खम् आकाशम् उत्पतन्त्यः अमूः गोदावरीसारसपङ्क्तयः त्वां प्रत्युद्व्रजन्ति इव ॥

एषा त्वया पेशलमध्ययापि घटाम्बुसंवर्धितबालचूता ।
आह्लादयत्युन्मुखकृष्णसारा दृष्टा चिरात्पञ्चवटी मनो मे ॥ ३४ ॥

पेशलमध्ययापि । भाराक्षमयापीत्यर्थः । त्वया घटाम्बुभिः संवर्धिता बालचूता यस्याः सा [ घटाम्बुसंवर्धितबालचूता ] । उन्मुखा अस्मदभिमुखास्त्वत्संवर्धिता एव कृष्णसारा यस्याः सा उन्मुखकृष्णसारा चिराद् दृष्टा एषा पञ्चवटी मे मनः आह्लादयति । आनन्दयति । पञ्चवटीशब्दः पूर्वमेव व्याख्यातः ॥

अत्रानुगोदं मृगयानिवृत्तस्तरंगवातेन विनीतखेदः ।
रहस्त्वदुत्सङ्गनिषण्णमूर्धा स्मरामि वानीरगृहेषु सुप्तः ॥ ३५ ॥

अत्र पञ्चवट्याम् । गोदा गोदावरी तस्याः समीपे अनुगोदम् । 'अनुर्यत्समया' इत्यव्ययीभावः । मृगयाया निवृत्तः [ मृगयानिवृत्तः ] तरंगवातेन विनीतखेदः रहः रहसि । अत्यंतसंयोगे द्वितीया । त्वदुत्सङ्गनिषण्णमूर्धा सन्नहं वानीरगृहेषु सुप्तः स्मरामि । वाक्यार्थः कर्म । सुप्त इति यत्तत्स्मरामीत्यर्थः ॥

भ्रूभेदमात्रेण पदान्मघोनः प्रभ्रंशयां यो नहुषं चकार ।
तस्याविलाम्भःपरिशुद्धिहेतोर्भौमो मुनेः स्थानपरिग्रहोऽयम् ॥ ३६ ॥

यः मुनिः भ्रूभेदमात्रेण भ्रूभङ्गमात्रेणैव नहुषं राजानं मघोनः पदाद् इन्द्र-

---

१ अनेन उन्मादाख्यो व्यभिचारिभाव उक्तः । 'चित्तसंमोह उन्मादः कामशोकभयादिभिः ।' इ० सा० द० । लतानां स्त्रीसादृश्यमुक्तं कुमारे–पर्याप्तपुष्पस्तबकस्तनाभ्यः स्फुरत्प्रवालोष्ठमनोहराभ्यः । लतावधूभ्यस्तरवोऽप्यवापुर्विनम्रशाखाभुजबन्धनानि ॥ इति । २ स्ताविल०. ३ पेलव, कोमल इ. पा. ४ आनन्दयति इ. उन्मुख–उन्मद इ. च पा०. ५ नीरदश्यामरामावलोकनेनाब्दबुद्ध्योन्मुख्यात्कृष्णभाग मयूरा इति वा, इ. हे० । नीलोत्पलदलाभिरामं रामं विलोक्य जीमूतोऽयमिति भ्रान्तेर्मयूराणामुन्मुखत्वमिति भावः । उक्तं चान्यत्र–वीक्ष्य राघवमुपात्तकार्मुकं सेन्द्रचापनवमेघशङ्कया । नत्र नव मनृतुः शिखण्डिनः दर्शनादुपरि वाहनोन्मुखाः ॥ इ. चा० सु० दयः । ६ निवृत्त०. ७ निषङ्ग-निषक्त, इ., इतः–सुप्तम् इ. च पा०. ८ समुदायेषु प्रवृत्ताः शब्दा अवयवेष्वपि वर्तन्ते इति न्यायाद्वनुगोदमिति पदैकदेशप्रयोगः । भीमो भीमसेनः सत्या सत्यभामा इतिवत् । इ. चारि०. ९ भद्र इ. पा० १० प्राभ्रंशयो नहुषं प्रमत्तं इ. पा०. ११ यथाविला० इ. पा.

त्वात् भ्रंशयां चकार प्रभ्रंशयति स्म । आविलाम्भःपरिशुद्धिहेतोः कलुषजल-प्रसादहेतोः तस्य मुनेः अगस्त्यस्य । अगस्त्योदये शरदि जलं प्रसीदतीत्युक्तं प्राक् । भूमौ भवो भौमः स्थानपरिग्रहः आश्रमः अयम् । दृश्यत इति शेषः । भौम इत्यनेन दिव्योऽप्यस्तीत्युक्तम् । परिगृह्यत इति परिग्रहः । स्थानमेव परिग्रह इति विग्रहः ॥

त्रेताग्निधूमाग्रमनिन्द्यकीर्तेस्तस्येदमाक्रान्तविमानमार्गम् ।
घ्रात्वा हविर्गन्धि रजोविमुक्तः समश्नुते मे लघिमानमात्मा ॥ ३७ ॥

अनिन्द्यकीर्तेः तस्य अगस्त्यस्य आक्रान्तविमानमार्गम् । हविर्गन्धोऽस्यास्तीति हविर्गन्धि । त्रेताग्निरग्नित्रयम् । 'अग्नित्रयमिदं त्रेता' इत्यमरः । पृषोदरादित्वात्साधुत्वम् । त्रेताग्नेर्धूमाग्रम् [ त्रेताग्निधूमाग्रम् ] इदं घ्रात्वा आघ्राय रजसो गुणाद्विमुक्तः [ रजोविमुक्तः ] मे मम आत्मा अन्तःकरणं लघिमानं लघुत्वगुणं समश्नुते प्राप्नोति ॥

एतन्मुनेर्मानिनि शातकर्णेः पञ्चाप्सरो नाम विहारवारि ।
आभाति पर्यन्तवनं विदूरान्मेघान्तरालक्ष्यमिवेन्दुबिम्बम् ॥ ३८ ॥

हे मानिनि शातकर्णेः मुनेः संबन्धि पञ्चाप्सरः नाम पञ्चाप्सरं इति प्रसिद्धम् । पञ्चाप्सरसो यस्मिन्निति विग्रहः । पर्यन्तेषु वनानि यस्य तत् पर्यन्तवनम् एतद् विहारवारि क्रीडासरः विदूरात् । मेघानामन्तरे मध्य आलक्ष्यमीषद् दृश्यम् [ मेघान्तरालक्ष्यम् ] । 'आ ईषदर्थेऽभिव्याप्तौ' इत्यमरः । इन्दुबिम्बम् इव आभाति ॥

पुरा स दर्भाङ्कुरमात्रवृत्तिश्चरन्मृगैः सार्धमृषिर्मघोना ।
समाधिभीतेन किलोपनीतः पञ्चाप्सरोयौवनकूटबन्धम् ॥ ३९ ॥

पुरा पूर्वस्मिन्काले दर्भाङ्कुरमात्रवृत्तिः तन्मात्राहारः मृगैः सार्धं सह चरन् स ऋषिः समाधेस्तपसो भीतेन [ समाधिभीतेन ] मघोना इन्द्रेण पञ्चानामप्सरसां

---

१ प्रभ्रंशयां चकार-अयमनन्वयोग इति पाणिनीयाः । 'प्रभ्रंशं यातीति प्रभ्रंशयास्तं प्रभ्रंशयामिति नहुषविशेषणम्' इत्यपि केचिद्व्याचक्षते । नहुषभ्रंशने कथा-पुरा किल ब्रह्महत्याऽपापैरतेजोहीने दीनसत्त्वे च शक्रे ऋषयो देवाश्च समेत्य पुरुवंशसंभवं नहुषाख्यं नृपं स्वतेजोभिरभिवर्ध्य सुरराज्येऽभ्यषिञ्चन् । ततो नहुषः शचीदेवीं चकमे । शची निस्तन्तुमविष्टस्य मूढस्यस्य पत्युरुपदेशाद्दृषयश्चेत्त्वां वहन्ति तदा त्वां भजामीत्युवाच । सोऽपि तद्वै गाढगर्वमूढधीस्तया कृत्वां शिबिकां वहद्भिर्महर्षिभिर्विकृष्यमाणोऽगस्त्यं पादेन मूर्ध्नि अताडयत् । कुपितेन तेन दशवर्षसहस्राणि यावत्सर्पस्त्वयरो भवेति शप्तः स तत्क्षणमेव धरण्यां पपात । म. भा. उद्यो. प. अ. १०, १६. २ स० ४, श्लो. २०. ३ 'उद्गम' इ. पा०. ४ महिना०. ५ त्रय एव त्रेता इ. मल्लि०; 'त्रागं त्राः सद्य संधुक्षणं गामिना । यद्वा त्रायन्ते अत्राहुतयस्ताभिरिता । त्रित्वमिता इति वा । पृषोदरादिः' इ. भानु०. ६ 'माण्ड-न्द्र-कर्णेः' इ. पा०. ७ अत्र रामायणम्-इदं पञ्चाप्सरो नाम तटाकं सार्वकालिकम् । निर्मितं तपसा तेन मुनिना माण्डकर्णिना ॥ इति । ८ ०भेदेन इ.; उपनीतः-अभिनीतः । इ. ९ यन्त्र०.

यौवनम् । 'तद्धितार्थ–' इत्यादिनोत्तरपदसमासः । तदेव कूटयन्त्रं कपटयन्त्रं [ पञ्चाप्सरोयौवनकूटबन्धम् ] उपनीतः । 'उन्माथः कूटयन्त्रं स्यात्' इत्यमरः । किल इत्यैतिह्ये । मृगसाहचर्यान्मृगवदेव बद्ध इति भावः ॥

**तस्यायमन्तर्हितसौधभाजः प्रसक्तसंगीतमृदङ्गघोषः ।**
**वियद्गतः पुष्पकचन्द्रशालाः क्षणं प्रतिश्रुन्मुखराः करोति ॥ ४० ॥**

**अन्तर्हितसौधभाजः** जलान्तर्गतप्रासादगतस्य **तस्य** शातकर्णेः **अयं** प्रसक्तः संततः संगीतमृदङ्गघोषः [ **प्रसक्तसंगीतमृदङ्गघोषः** ] **वियद्गतः** सन्पुष्पकस्य चन्द्रशालाः शिरोगृहाणि [ **पुष्पकचन्द्रशालाः** ] । 'चन्द्रशाला शिरोगृहम्' इति हलायुधः । **क्षणं** प्रतिश्रुद्भिः प्रतिध्वानैर्मुखरा ध्वनन्तीः [ **प्रतिश्रुन्मुखराः** ] **करोति** । 'स्त्री प्रतिश्रुत्प्रतिध्वाने' इत्यमरः ॥

**हविर्भुजामेधवतां चतुर्णां मध्ये ललाटंतपसप्तसप्तिः ।**
**असौ तपस्यत्यपरस्तपस्वी नाम्ना सुतीक्ष्णश्चरितेन दान्तः ॥ ४१ ॥**

**नाम्ना सुतीक्ष्णः** सुतीक्ष्णनामा **चरितेन दान्तः** सौम्यः **असौ अपरः तपस्वी । एधवताम्** इन्धनवताम् । 'काष्ठं दार्विन्धनं त्वेधः' इत्यमरः । **चतुर्णां हविर्भुजाम्** अग्नीनां **मध्ये** । [ **ललाटंतपसप्तसप्तिः** ] ललाटं तपतीति ललाटंतपः सूर्यः । 'असूर्यललाटयोर्दृशितपोः' इति खश्प्रत्ययः । 'अरुर्द्विषत्–' इत्यादिना मुमागमः । ललाटंतपः सप्तसप्तिः सप्ताश्वः सूर्यो यस्य स तथोक्तः सन् । **तपस्यति** तपश्चरति । 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः' इति क्यङ् । तपसः परस्मैपदं च' इति वक्तव्यम् ॥

**अमुं सहासप्रहितेक्षणानि व्याजार्धसंदर्शितमेखलानि ।**
**नालं विकर्तुं जनितेन्द्रशङ्कं सुराङ्गनाविभ्रमचेष्टितानि ॥ ४२ ॥**

**जनितेन्द्रशङ्कम्** । तपसेति शेषः । **अमुं** सुतीक्ष्णं सहासं प्रहितानीक्षणानि दृष्टयो येषु तानि [ **सहासप्रहितेक्षणानि** ] । व्याजेन केनचिन्मिषेण । 'पुंस्यर्धोऽर्धे समेंऽशके' इति विश्वः । अर्धमीषत्संदर्शिता मेखला येषु तानि [ **व्याजार्धसंदर्शितमेखलानि** ] सुराङ्गनानामिन्द्रप्रेषितानां विभ्रमा विलासा एव चेष्टितानि [ **सुराङ्गनाविभ्रमचेष्टितानि** ] **विकर्तुं** स्खलयितुम् **अलं** समर्थानि **न** । बभूवुरिति शेषः ॥

**एषोऽक्षमालावलयं मृगाणां कण्डूयितारं कुशसूचिलावम् ।**
**सभाजने मे भुजमूर्ध्वबाहुः सव्येतरं प्राध्वमितः प्रयुङ्क्ते ॥ ४३ ॥**

---

१ 'प्रयुङ्क्ते' इ. पा०; घोषः—नादः, शब्दः इ. पा०. २ 'प्रेक्षार्थं गीतवाद्यं तु संगीतकमुदाहृतम्' इति हलायुधः । 'गीतं वाद्यं नर्तनं च त्रयं संगीतमुच्यते' इति संगीतदर्पणम् । ३ एतदेव पञ्चाग्निसाधनमित्युच्यते । 'अग्निः सविता सवितैवाग्निः' इति श्रौतलिङ्गात्सूर्योऽप्यग्निरेव । अनुरूपवर्णनं कुमारसम्भवे चतुर्णां ज्वलतां शुचिस्मिता हविर्भुजां मध्यगता सुमध्यमा । विजित्य नेत्रप्रतिघातिनीं प्रभामनन्यदृष्टिः सवितारमैक्षत ॥ इति । ४ महा०. ५ संभावयन्, ६ उग्रतेजाः, ७ प्रांशु०

ऊर्ध्वबाहुः एष सुतीक्ष्णोऽक्षमालैव वलयं यस्य तं [ अक्षमालावलयम् ] मृगाणां कण्डूयितारम् । कुशा एव सूचयस्ता लुनातीति कुशसूचिलावस्तं [ कुशसूचिलावम् ]। 'कर्मण्यण्' इत्यण् । एभिर्विशेषणैर्जयशीलत्वं भूतदया कर्मक्षमत्वं च द्योत्यते । सव्यादितरं दक्षिणं [ सव्येतरं ] भुजं मे मम सभाजने संमाननिमित्ते । 'निमित्तात्कर्मयोगे' इति सप्तमी । इतः प्राध्वं प्रकृतानुकूल्यर्थं प्रयुङ्क्ते । 'आनुकूल्यार्थकं प्राध्वम्' इत्यमरः । अव्ययं चैतत् ॥

वाचंयमत्वात्प्रणतिं ममैष कम्पेन किंचित्प्रतिगृह्य मूर्ध्नः ।
दृष्टिं विमानव्यवधानमुक्तां पुनः सहस्रार्चिषि संनिधत्ते ॥ ४४ ॥

एष सुतीक्ष्णः । वाचं यच्छतीति वाचंयमो मौनव्रती । 'वाचि यमो व्रते' इति खच्प्रत्ययः । 'वाचंयमपुरंदरौ च' इति मुम् । तस्य भावस्तत्त्वात् [ वाचंयमत्वात् ] मम प्रणतिं किंचिन्मूर्ध्नः कम्पेन प्रतिगृह्य विमानेन व्यवधानं तिरोधानं तस्मान्मुक्ताम् [ विमानव्यवधानमुक्तां ]। 'अपेतापोढमुक्तपतित-' इत्यादिना पञ्चमीसमासः । दृष्टिं पुनः सहस्रार्चिषि सूर्ये संनिधत्ते । सम्यग्धत्त इत्यर्थः ॥ अन्यथा कर्मकर्तृत्वप्रसङ्गात् ॥

अदः शरण्यं शरभङ्गनाम्नस्तपोवनं पावनमाहिताग्नेः ।
चिराय संतर्प्य समिद्भिरग्निं यो मन्त्रपूतां तनुमप्यहौषीत् ॥ ४५ ॥

शरणे रक्षके साधु शरण्यम् । पावयतीति पावनम् । अदः दृश्यमानं तपोवनम् आहिताग्नेः शरभङ्गनाम्नः मुनेः संबन्धि । यः शरभङ्गः चिराय चिरम् अग्निं समिद्भिः संतर्प्य तर्पयित्वा ततो मन्त्रैः पूतां शुद्धां [ मन्त्रपूतां ] तनुम् अपि अहौषीत् हुतवान् । जुहोतेर्लुङ् ॥

छायाविनीताध्वपरिश्रमेषु भूयिष्ठसंभाव्यफलेष्वमीषु ।
तस्यातिथीनामधुना सपर्या स्थिता सुपुत्रेष्विव पादपेषु ॥ ४६ ॥

अधुना अस्मिन्काले तस्य शरभङ्गस्य संबन्धिनी अतिथीनां सपर्या अतिथिपूजा । छायाभिर्विनीतोऽध्वपरिश्रमो यैस्तेषु [ छायाविनीताध्वपरिश्रमेषु ] भूयिष्ठानि बहुतमानि संभाव्यानि श्लाघ्यानि फलानि येषां तेषु [ भूयिष्ठसंभाव्यफलेषु ] अमीषु पादपेषु आश्रमवृक्षेषु सुपुत्रेषु इव स्थिता । तत्पुत्रैरिव पादपैरनुष्ठीयत इत्यर्थः ॥

धारास्वनोद्गारिदरीमुखोऽसौ शृङ्गाग्रलग्नाम्बुदवप्रपङ्कः ।
बध्नाति मे बन्धुरगात्रि चक्षुर्दृप्तः ककुद्मानिव चित्रकूटः ॥ ४७ ॥

---

१ कर्मणि षष्ठी । २ मुक्ते. ३ 'शरभङ्गो महातेजाः प्रविवेश हुताशनम्' इ. रामायणम् । ४ संभाव्यानि प्राप्याणि इ. दि० व०; मनोहराणि इ. हे० । ५ कम्पः. ६ दृष्टः.

धाराणां निर्झरधाराणां यद्वा धारया सातत्येन स्वनोद्गारि दर्येव मुखं यस्य सः [ **धारास्वनोद्गारिदरीमुखः** ]। शृङ्गं शिखरं विषाणं च । तस्याग्रे लग्नोऽम्बुद एव वप्रपङ्को वप्रक्रीडासक्तपङ्को यस्य सः [ **शृङ्गाग्रलग्नाम्बुदवप्रपङ्कः** ]। **असौ चित्रकूटः** हे **बन्धुरगात्रि** उन्नतानताङ्गि । **दृप्तः ककुद्मान् वृषभ इव मे चक्षुः बध्नाति** अनन्यासक्तं करोति ॥

**एषा प्रसन्नस्तिमितप्रवाहा सरिद्विदूरान्तरभावतन्वी ।**
**मन्दाकिनी भाति नगोपकण्ठे मुक्तावली कण्ठगतेव भूमेः ॥ ४८ ॥**

प्रसन्नो निर्मलः स्तिमितो निःस्पन्दः प्रवाहो यस्याः सा [ **प्रसन्नस्तिमितप्रवाहा** ] विदूरस्यान्तरस्य मध्यवर्त्यवकाशस्य भावात्तन्वी [ **विदूरान्तरभावतन्वी** ] दूरदेशवर्तित्वात्तनुत्वेनावभासमाना **मन्दाकिनी** नाम कश्चिच्चित्रकूटनिकटवर्तिनी **एषा सरित् नगोपकण्ठे भूमेः कण्ठगता मुक्तावली इव भाति** । अत्र नगस्य शिरस्त्वं तदुपकण्ठस्य कण्ठत्वं च गम्यते ॥

**अयं सुजा[1]तोऽनुगिरं तमालः प्र[3]वालमादाय सुगन्धि यस्य ।**
**[4]यवाङ्कुरापाण्डुकपोलशोभी मयावतंसः परिकल्पितस्ते ॥ ४९ ॥**

गिरेः समीपे **अनुगिरम्** । 'गिरेश्च सेनकस्य' इति समासान्तष्टच्प्रत्ययः । **सुजातः स तमालः अयं** दृश्यते । **यस्य** तमालस्य । शोभनो गन्धो यस्य तत् **सुगन्धि** । 'गन्धस्य–' इत्यादिनेकारः समासान्तः । **प्रवालं** पल्लवम् **आदाय मया ते** यवाङ्कुरवदापाण्डौ कपोले शोभी शोभते यः स [ **यवाङ्कुरापाण्डुकपोलशोभी** ] **अवतंसः परिकल्पितः** ॥

**अनिग्रहत्रासविनीतसत्त्वमपुष्पलि[6]ङ्गात्फलबन्धिवृक्षम् ।**
**वनं तपःसाधनमेतदत्रेराविष्कृतोदग्रतरप्रभावम् ॥ ५० ॥**

अनिग्रहत्रासाद् दण्डभयरहिता अपि विनीताः सत्त्वा जन्तवो यस्मिंस्तत् [ **अनिग्रहत्रासविनीतसत्त्वम्** ]। **अपुष्पलिङ्गात्** पुष्परूपनिमित्तं विनैव फलबन्धिनः फलग्राहिणो वृक्षा यस्मिंस्तत् [ **फलबन्धिवृक्षम्** ]। अत एव **आविष्कृतोदग्रतरप्रभावम् अत्रेः** मुनेः तपसः साधनं [ **तपःसाधनं** ] **वनम् एतत्** ॥

**अत्राभिषेकाय तपोधनानां सप्तर्षिहस्तोद्धृतहेमपद्माम् ।**
**प्रवर्तयामास किलानुसूया त्रिस्रोतसं त्र्यम्बकमौलिमालाम् ॥ ५१ ॥**

**अत्र वने अनुसूया** अत्रिपत्नी । सप्त च ते ऋषयश्च सप्तर्षयः । 'दिक्संख्ये संज्ञायाम्' इति तत्पुरुषसमासः । तेषां हस्तैरुद्धृतानि हेमपद्मानि यस्यास्तां [ **सप्तर्षि-**

---

१ अगो. २ सुन्दः. ३ नव प्रवालोपचयेन, नव प्रवालानचयेन. ४ कर्णार्पितेनाकर्षं कपोलप्रभावर्धिका यवाङ्कुरस्येवम् इ. पा०। प्रिये सुन्दोऽनुगिरि तमालस्तव प्रवालोपचयेन यस्य । कर्णार्पि० इति च०. ५ फलार्थी. ६ हिंगात्फ०. ७ तपः०. ८ नगृ०. ९ अत्र रामायणम्—दशवर्षाण्यनावृष्ट्या दग्धे लोके निरन्तरम् ॥ यया मूलफले सृष्टे जाह्नवी च प्रवर्तिता । उग्रेण तपसा युक्ता नियमैश्चाप्यलंकृता ॥ इ० रामा. अयो० स० ११७. ९–१०.

हस्तोद्धृतहेमपद्मां ] त्र्यम्बकमौलिमालां हरशिरःस्रजं त्रिस्रोतसं भागीरथीं तपोधनानाम् ऋषीणाम् अभिषेकाय स्नानाय प्रवर्तयामास प्रवाहयामास । किल इत्यैतिह्ये ॥

वीरासनैर्ध्यानजुषामृषीणाममी समध्यासितवेदिमध्याः ।
निवातनिष्कम्पतया विभान्ति योगाधिरूढा इव शाखिनोऽपि ॥ ५२ ॥

वीरासनैः जयसाधनैः । ध्यानं जुषन्ते सेवन्त इति ध्यानजुषः । तेषां [ ध्यानजुषां ] तैरुपविश्य ध्यायताम् ऋषीणां संबन्धिनः समध्यासितवेदिमध्याः । इदं वीरासनस्थानीयम् । अमी शाखिनः अपि निवाते निष्कम्पतया [ निवातनिष्कम्पतया ] योगाधिरूढा इव ध्यानभाज इव विभान्ति । ध्यायन्तोऽपि निश्चलाङ्गा भवन्ति । वीरासने वसिष्ठः—'एकपादमथैकस्मिन्विन्यस्योरुणि संस्थितम् । इतरस्मिंस्तथा चान्यं वीरासनमुदाहृतम् ॥' इति ॥

त्वया पुरस्तादुपयाचितो यः सोऽयं वटः श्याम इति प्रतीतः ।
राशिर्मणीनामिव गारुडानां सपद्मरागः फलितो विभाति ॥ ५३ ॥

त्वया पुरस्तात् पूर्वं यः उपयाचितः प्रार्थितः । तथा च रामायणे—'न्यग्रोधं तमुपस्थाय वैदेही वाक्यमब्रवीत् । नमस्तेऽस्तु महावृक्ष पारयेन्मे व्रतं पतिः ॥' इति । श्यामः इति प्रतीतः स वटः अयं फलितः सन् । सपद्मरागः गारुडानां मणीनां मरकतानां राशिः इव । विभाति ॥

'क्वचित्-' इत्यादिभिश्चतुर्भिः श्लोकैः प्रयागे गङ्गायमुनासंगमं वर्णयति—

क्वचित्प्रभालेपिभिरिन्द्रनीलैर्मुक्तामयी यष्टिरिवानुविद्धा ।
अन्यत्र माला सितपङ्कजानामिन्दीवरैरुत्खचितान्तरेव ॥ ५४ ॥
क्वचित्खगानां प्रियमानसानां कादम्बसंसर्गवतीव पङ्क्तिः ।
अन्यत्र कालागुरुदत्तपत्रा भक्तिर्भुवश्चन्दनकल्पितेव ॥ ५५ ॥
क्वचित्प्रभा चान्द्रमसी तमोभिश्छायाविलीनैः शबलीकृतेव ।
अन्यत्र शुभ्रा शरदभ्रलेखा रन्ध्रेष्विवालक्ष्यनभःप्रदेशा ॥ ५६ ॥
क्वचिच्च कृष्णोरगभूषणेव भस्माङ्गरागा तनुरीश्वरस्य ।
पश्यानवद्याङ्गि विभाति गङ्गा भिन्नप्रवाहा यमुनातरंगैः ॥ ५७ ॥

हे अनवद्याङ्गि यमुनातरङ्गैर्भिन्नप्रवाहा व्यामिश्रौघा गङ्गा जाह्नवी विभाति ।

---

१ ०भृतां, मुनीनाम् इ०; मध्या–बन्धाः; निवात०–निवातनिष्पन्दतया, निर्वात० इ. च पा० । २ तन्त्रसारे यथा–एकपादमधः कृत्वा विन्यस्योरौ तथेतरम् । ऋजुकायो विशेन्मन्त्री वीरासनमितीरितम् ॥ ३ उपपोषित०. ४ प्रसिद्धः, प्रकाशः. ५ दीयते यत्र देवेभ्यो मनोराज्यस्य सिद्धये । उपयाचितकं दिव्यं दोहदं तद्विदुर्बुधाः ॥ ६ त्काचिता, त्दुग्रथिता. ७ ऽभि०, निली०. ८ मीश०. ९ इतः परं–नमिश्रया शुक्लनिशेव भिन्ना कुन्दस्रगिन्दीवरमालयेव । कृत्तिर्हरेः कृष्णमृगत्वचेव भूतिः स्मरा-

त्वं पश्य । केव । क्वचित् प्रदेशे प्रभया लिम्पन्ति संनिहितमिति प्रभालेपिभिः इन्द्रनीलैः अनुविद्धा सह गुम्फिता मुक्तामयी यष्टिः इव हारावलिरिव । विभाति । अन्यत्र प्रदेशे इन्दीवरैः नीलोत्पलैः उत्खचितान्तरा सह ग्रथिता सितपङ्कजानां पुण्डरीकाणां माला इव । विभातीति सर्वत्र संबन्धः । क्वचित्कादम्बसंसर्गवती नीलहंससंसृष्टा प्रियं मानसं नाम सरो येषां तेषां [ प्रियमानसानां ] खगानां राजहंसानां पङ्क्तिः इव। 'राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः।' इत्यमरः। अन्यत्र कालागुरुणा दत्तपत्त्रा रचितमकरिकापत्त्रा [ कालागुरुदत्तपत्त्रा ] भुवः चन्दनकल्पिता भक्तिः इव । क्वचित् छायासु विलीनैः स्थितैः [ छायाविलीनैः ] तमोभिः शबलीकृता कर्बुरीकृता चान्द्रमसी प्रभा चन्द्रिका इव । अन्यत्र रन्ध्रेषु आलक्ष्यनभःप्रदेशा शुभ्रा शरदभ्रलेखा शरन्मेघपङ्क्तिः इव । क्वचिच्च कृष्णोरगभूषणा भस्माङ्गरागा ईश्वरस्य तनुः इव । विभाति । शेषो व्याख्यातः । कलापकम् ॥

समुद्रपत्न्योर्जलसंनिपाते पूतात्मनामत्र किलाभिषेकात् ।
तत्त्वावबोधेन विनापि भूयस्तनुत्यजां नास्ति शरीरबन्धः ॥ ५८ ॥

अत्र समुद्रपत्न्योः गङ्गायमुनयोः जलसंनिपाते संगमे अभिषेकात् स्नानात् पूतात्मनां तनुत्यजां शुद्धात्मनां पुंसां तत्त्वावबोधेन तत्त्वज्ञानेन विनापि प्रारब्धशरीरत्यागानन्तरं भूयः पुनः शरीरबन्धः शरीरयोगः नास्ति किल । अन्यत्र ज्ञानादेव मुक्तिः । अत्र तु स्नानादेव मुक्तिरित्यर्थः ॥

पुरं निषादाधिपतेरिदं तद्यस्मिन्मया मौलिमणिं विहाय ।
जटासु बद्धास्वरुदत्सुमन्त्रः कैकेयि कामाः फलितास्तवेति ॥ ५९ ॥

निषादाधिपतेः गुहस्य तत्पुरमिदम् । यस्मिन् पुरे मया मौलिमणिं विहाय जटासु बद्धासु रचितासु सतीषु सुमन्त्रः ' हे कैकेयि तव कामाः मनोरथाः फलिताः सफला जाताः ' इति अरुदत् । ' रुदिरश्रुविमोचने ' इति धातोर्लङ् ॥

---

रोधि कण्ठभासा ॥ दृश्यार्धया शारदमेघलेखा निर्धौतनिस्त्रिंशरुचा दिशेव । गवाक्षफालाउरभ्रमराज्या हर्म्यस्थलीवैपराधा नवेव ॥ तुषारसघातशिला हिमाद्रिर्जात्यञ्जनप्रस्तरशोभयेव । दन्तत्विषा मानसगोचराणां श्रेणीव कादम्बविहङ्गपङ्क्त्या ॥ नितान्तशुद्धस्फटिकाक्षयोगाद्विद्रूयंकान्त्या रत्नावलीव । गङ्गार्कवैरात्मजया समेत्य पुष्यत्युदारां परभागलक्ष्मीम् ॥ इति चतुरः श्लोकान् व्या॰द्वयः पठन्ति ।

१ शरीरिणाम्, रसिताभिते सरिते यत्र संगते तत्राप्लुतासो दिवमुत्पतन्ति । ये वै तन्वं विसृजन्ति धीरास्ते जनासो अमृतत्वं भजन्ते । ऋ. अष्ट. अ. मु. प. ६ परि॰ । या गतिर्योगयुक्तस्य तत्त्वज्ञस्य मनीषिणः । सा गतिस्त्यजतः प्राणान् गङ्गायमुनसंगमे ॥ इति स्मृतिरपि । यत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥ इ. भारतम् । १ तैः पुरस्तात्, इ., मणीन्, सुमन्त्रः, इ. च पा॰

पयोधरैः पुण्यजनाङ्गनानां निर्विष्टहेमाम्बुजरेणु यस्याः ।
ब्राह्मं सरः कारणमाप्तवाचो बुद्धेरिवाव्यक्तमुदाहरन्ति ॥ ६० ॥

**पुण्यजनाङ्गनानां** यक्षस्त्रीणां **पयोधरैः** स्तनैर्निर्विष्ट उपभुक्तो हेमाम्बुजरेणुर्यस्य तत् [ **निर्विष्टहेमाम्बुजरेणु** ]। तत्र ताः क्रीडन्तीति व्यज्यते । ब्रह्मण इदं ब्राह्मम् । 'नस्तद्धिते' इति टिलोपः । **ब्राह्मं सरः** मानसाख्यं **यस्याः** सरय्वाः । **बुद्धेः** महत्तत्त्वस्य **अव्यक्तं** प्रधानम् **इव कारणम्** आप्तस्य वाचः **आप्तवाचः** वेदाः यद्वा बहुव्रीहिणा मुनयः **उदाहरन्ति** प्रचक्षते ॥

जलानि या तीरनिखातयूपा वहत्ययोध्यामनु राजधानीम् ।
तुरंगमेधावभृथावतीर्णैरिक्ष्वाकुभिः पुण्यतरीकृतानि ॥ ६१ ॥

यूपः संस्कृतः पशुबन्धनार्हो दारुविशेषः । **तीरनिखातयूपा या** सरयूः । तुरंगमेधा अश्वमेधास्तेष्ववभृथार्थमेवावतीर्णैरवरूढैः [ **तुरंगमेधावभृथावतीर्णैः** ] **इक्ष्वाकुभिः** इक्ष्वाकुगोत्रापत्यैर्नृपैः पूर्वैः । तद्राजत्वादणो लुक् । **पुण्यतरीकृतानि** अतिशयेन पुण्यानि कृतानि **जलानि अयोध्यां राजधानीं** नगरीम् **अनु** समीपे । तया लक्षितयेत्यर्थः । अनुशब्दस्य 'लक्षणेत्थंभूत-' इत्यादिना कर्मप्रवचनीयत्वात्तद्योगे द्वितीया । **वहति** प्रापयति ॥

यां सैकतोत्सङ्गसुखोचितानां प्राज्यैः पयोभिः परिवर्धितानाम् ।
सामान्यधात्रीमिव मानसं मे संभावयत्युत्तरकोसलानाम् ॥ ६२ ॥

**यां** सरयूं **मे मानसं** कर्तृ । सैकतं पुलिनम् तदेवोत्सङ्गः तत्र यत्सुखं तत्रोचितानां [ **सैकतोत्सङ्गसुखोचितानां** ] **प्राज्यैः** प्रभूतैः **पयोभिः** अम्बुभिः क्षीरैश्च । 'पयः क्षीरं पयोऽम्बु च' इत्यमरः । **परिवर्धितानां** पुष्टानाम् **उत्तरकोसलानाम्** उत्तरकोसलेश्वराणां **सामान्यधात्रीं** साधारणमातरम् **इव** । **संभावयति** । 'धात्री जनन्यामलकीवसुमत्युपमातृषु' इति विश्वः । ॥

सेयं मदीया जननीव तेन मान्येन राज्ञा सरयूर्वियुक्ता ।
दूरे वसन्तं शिशिरानिलैर्मां तरंगहस्तैरुपगूहतीव ॥ ६३ ॥

**मदीया जननी** कौसल्या **इव मान्येन** पूज्येन **तेन राज्ञा** दशरथेन **वियुक्ता**

---

१ निर्दिष्ट०. २ अथामनन्ति. ३ वेदान्तमते मायोपाधिकं ब्रह्म । सांख्यमते प्रधानं; बुद्धिरेव महत्तत्त्वमिति तैरुच्यते-तदुक्तं सांख्यकारिकासु-मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥ तथा च गीतायाम्-'अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे' इ० । सरयूत्पत्तिः रामायणे यथा-कैलासपर्वते राम मनसा निर्मितं परम् । ब्रह्मणा नरशार्दूल तेनेदं मानसं सरः । तस्मात्सुस्राव सरसः सायोध्यामुपगूहते । सरःप्रवृत्ता सरयूः पुण्या ब्रह्मसरश्च्युता ॥ इति । ४ पूर्वैः. ५ पुण्यैः. ६ 'प्रभूतपुण्यैरिव' इ. पा० ७ 'जन्येन' इ. वियुक्ता-विमुक्ता; दूरे वसन्तं-दूरेऽपि सन्तम् इ. च पा०.

सा इयं सरयूः दूरे वसन्तम् । प्रोप्यागच्छन्तमित्यर्थः । मां पुत्रभूतं शिशिरानिलैः तरंगः एव हस्तैः [ तरंगहस्तैः ] उपगूहति इव आलिङ्गतीव ॥

विरक्तसंध्याकपिशं पुरस्ताद्यतो रजः पार्थिवमुज्जिहीते ।
शङ्के हनूमत्कथितप्रवृत्तिः प्रत्युद्गतो मां भरतः ससैन्यः ॥ ६४ ॥

विरक्तातिरक्ता या संध्या तद्वत्कपिशं ताम्रवर्णम् [ विरक्तसंध्याकपिशम् ]। पृथिव्या इदं पार्थिवम् । रजः धूलिः पुरस्ताद् अग्रे यतः यस्मात्कारणाद् उज्जिहीते उद्गच्छति । तस्मात् । हनुरस्यास्तीति हनूमान् । 'शरादीनां च' इति दीर्घः । तेन कथिता प्रवृत्तिरस्मदागमनवार्ता यस्मै स [ हनूमत्कथितप्रवृत्तिः ] भरतः ससैन्यः सन् मां प्रत्युद्गतः इति शङ्के तर्कयामि । 'शङ्का भयवितर्कयोः' इति शब्दार्णवे । अत्र यत्तदोर्नित्यसंबन्धात्तच्छब्दलाभः ॥

अद्धा[3] श्रियं पालितसंगराय प्रत्यर्पयिष्यत्यनघां स साधुः ।
हत्वा निवृत्ताय मृधे खरादीन्संरक्षितां त्वामिव लक्ष्मणो मे ॥ ६५ ॥

किं च । साधुः सज्जनः स भरतः । 'साधुर्वार्धुषिके चारौ सज्जने चापि वाच्यवत्' इति विश्वः । पालितसंगराय पालितपितृप्रतिज्ञाय मे मह्यम् अनघाम् अदोषां भोगाभावादनुच्छिष्टां किंतु संरक्षितां श्रियम् । मृधे युद्धे खरादीन् हत्वा निवृत्ताय मे लक्ष्मणः संरक्षितामनघां त्वाम् इव प्रत्यर्पयिष्यति अद्धा सत्यम् । 'सत्ये त्वद्धाञ्जसा द्वयम्' इत्यमरः ॥

असौ पुरस्कृत्य गुरुं पदातिः पश्चादवस्थापितवाहिनीकः ।
वृद्धैरमात्यैः सह चीरवासा मामर्घ्यपाणिर्भरतोऽभ्युपैति ॥ ६६ ॥

असौ पदातिः पादचारी चीरवासाः वल्कलवसनः भरतः पश्चात् पृष्ठभागे [ अवस्थापितवाहिनीकः ] अवस्थापिता वाहिनी सेना येन स तथोक्तः सन् । 'नद्यृतश्च' इति कप् । गुरुं वसिष्ठं पुरस्कृत्य वृद्धैः अमात्यैः सह अर्घ्यपाणिः सन् माम् अभ्युपैति ॥

पित्रा विसृष्टां मदपेक्षया यः श्रियं युवाप्यङ्कगतामभोक्ता ।
इयन्ति वर्षाणि तया सहोग्रमभ्यस्यतीव व्रतमासिधारम् ॥ ६७ ॥

यः भरतः पित्रा विसृष्टां दत्तामङ्कमन्तिकमुत्सङ्गं गताम् [ अङ्कगताम् ] अपि । यां श्रियं युवापि मदपेक्षया मद्भक्त्या अभोक्ता सन् । तृन्नन्तत्वात् 'न लोक' इति षष्ठीनिषेधः । इयन्ति वर्षाणि एतावतो वत्सरान् । अत्यन्तसंयोगे द्वितीया । तया श्रिया सह । स्त्रियेति च गम्यते । उग्रं दुश्चरम् आसिधारं नाम व्रतम् अभ्यस्यति

---

१ 'परुषम्'; यत–'यथा' 'यस्मात्' इ. च पा० । २ हनुः कुत्सितो यस्य । तस्य किल जातमात्रस्योत्पत्य पक्वफलधिया रविं जिघांसोः इन्द्रवज्रेण हनुर्भग्नेति श्रूयते । ३ 'अद्य' इ, मृधे–'रणे' इ. च पा० । ४ द्वा. स. श्लो. ४४. ५ अर्घ० ६ पातिव्रति०, नियताम् ७ 'नितान्तकष्टम्' इ. पा०

इव वर्तयतीव । 'युवा युवत्या सार्धं यन्मुग्धभर्तृवदाचरेत् । अन्तर्निवृत्तसङ्गः स्यादासिधारव्रतं हि तत् ॥' इति यादवः । इदं चासिधाराचंक्रमणतुल्यत्वादासिधारव्रतमित्युक्तम् ॥

**एतावदुक्तवति दाशरथौ तदीया-**
**मिच्छां विमानमधिदेवतया विदित्वा ।**
**ज्योतिष्पथादवततार सविस्मयाभि-**
**रुद्वीक्षितं प्रकृतिभिर्भरतानुगाभिः ॥ ६८ ॥**

**दाशरथौ** रामे **एतावद् उक्तवति** सति **विमानं** पुष्पकं कर्तृ **तदीयां** रामसंबन्धिनीम् **इच्छां अधिदेवतया विदित्वा** । तत्प्रेरितं सदित्यर्थः । **सविस्मयाभिः भरतानुगाभिः प्रकृतिभिः** प्रजाभिः **उद्वीक्षितं** सत् **ज्योतिष्पथात्** आकाशात् **अवततार** ॥

**तस्मात्पुरःसरविभीषणदर्शितेन**
**सेवाविचक्षणहरीश्वरदत्तहस्तः ।**
**यानादवातरददूरमहीतलेन**
**मार्गेण भङ्गिरचितस्फाटिकेन रामः ॥ ६९ ॥**

**रामः [ सेवाविचक्षणहरीश्वरदत्तहस्तः ]** सेवायां विचक्षणः कुशलो हरीश्वरः सुग्रीवस्तेन दत्तो हस्तो हस्तावलम्बो यस्य तादृशः सन् । स्थलज्ञत्वात्पुरःसरो विभीषणस्तेन **[ पुरःसरविभीषणदर्शितेन ]** अदूरमासन्नं महीतलं यस्य तेन **[ अदूरमहीतलेन ]** भङ्गिभिर्विच्छित्तिभी रचितस्फटिकेन बद्धस्फटिकेन **[ भङ्गिरचितस्फटिकेन ]** सोपानपर्वणा **मार्गेण तस्मात् यानात्** पुष्पकात् **अवातरत्** अवतीर्णवान् । तरतेर्लङ् ॥

**इक्ष्वाकुवंशगुरवे प्रयतः प्रणम्य**
**स भ्रातरं भरतमर्घ्यपरिग्रहान्ते ।**
**पर्यश्रुरस्वजत मूर्धनि चोपजघ्रौ**
**तद्भक्त्यपोढपितृराज्यमहाभिषेके ॥ ७० ॥**

**प्रयतः स** रामः **इक्ष्वाकुवंशगुरवे** वसिष्ठाय **प्रणम्य** नमस्कृत्यार्घ्यस्य परिग्रहः स्वीकारस्तस्यान्ते **[ अर्घ्यपरिग्रहान्ते ] पर्यश्रुः** परिगतानन्दबाष्पः सन् । **भ्रातरं भरतं अस्वजत** आलिङ्गत् । तस्मिन्रामे भक्त्याऽपोढः परिहृतः पितृराज्यमहाभिषेको येन

---

१ यत्रैकशयनस्थापि प्रमदा नोपभुज्यते । आसिधाराव्रतं नाम वदन्ति मुनिपुंगवाः ॥ 'एकस्यामेव शय्यायां मध्ये खड्गं निधाय स्त्रीपुंसौ यत्र ब्रह्मचर्येण शयाते तदसिधाराव्रतम् ।' इ. दिनकरः । २ 'सभ्रातरम्' इ. पा. ३ अर्घं इ. पा०

तस्मिन् [ तद्भक्त्यपोढपितृराज्यमहाभिषेके ] मूर्धनि उपजघ्रौ च । 'घ्रा गन्धोपादाने' लिटि रूपम् ॥

श्मश्रुप्रवृद्धिजनिताननविक्रियांश्च
प्लक्षान्प्ररोहजटिलानिव मन्त्रिवृद्धान् ।
अन्वग्रहीत्प्रणमतः शुभदृष्टिपातै-
र्वार्तानुयोगमधुराक्षरया च वाचा ॥ ७१ ॥

श्मश्रूणां मुखरोम्णां प्रवृद्धया संस्काराभावादभिवृद्धया जनिताननेषु विक्रिया विकृतिर्येषां तान् [ श्मश्रुप्रवृद्धिजनिताननविक्रियान् ] अत एव प्ररोहैः शाखावलम्बिभिरधोमुखैर्मूलैर्जटिलाञ्जटावतः [ प्ररोहजटिलान् ] प्लक्षान् न्यग्रोधान् इव स्थितान् । प्रणमतः मन्त्रिवृद्धान् च शुभैः कृपार्द्रैर्दृष्टिपातैः [ शुभदृष्टिपातैः ] वार्तस्यानुयोगेन कुशलप्रश्नेन मधुराक्षरया [ वार्तानुयोगमधुराक्षरया ] वाचा च अन्वग्रहीत् अनुगृहीतवान् ॥

दुर्जातबन्धुरयमृक्षहरीश्वरो मे
पौलस्त्य एष समरेषु पुरःप्रहर्ता ।
इत्यादृतेन कथितौ रघुनन्दनेन
व्युत्क्रम्य लक्ष्मणमुभौ भरतो ववन्दे ॥ ७२ ॥

अयं मे दुर्जातबन्धुः आपद्बन्धुः । 'दुर्जातं व्यसनं प्रोक्तम्' इति विश्वः । ऋक्षहरीश्वरः सुग्रीवः । एष समरेषु पुरःप्रहर्ता पौलस्त्यः विभीषणः । इत्यादृतेन आदरवता । कर्तरि क्तः । रघूणां नन्दनेन [ रघुनन्दनेन ] रामेण कथितौ उभौ विभीषणसुग्रीवौ लक्ष्मणं अनुजमपि व्युत्क्रम्य आलिङ्गनादिभिरसंभाव्य भरतः ववन्दे ॥

सौमित्रिणा तदनु संससृजे स चैन-
मुत्थाप्य नम्रशिरसं भृशमालिलिङ्ग ।
रूढेन्द्रजित्प्रहरणव्रणकर्कशेन
क्लिश्यन्निवास्य भुजमध्यमुरःस्थलेन ॥ ७३ ॥

तदनु सुग्रीवादिवन्दनानन्तरं स भरतः सौमित्रिणा संससृजे संगतः । 'सृज

---

१ आहृति इ., प्लक्षान्–वृक्षान् इ. अन्वग्रहीत्– प्रत्य॰ इ., दृष्टिपातैः– ॰दानैः इ. च पाठाः । २ दुःखैकबन्धुः, अज्ञातबन्धुः इ. पा॰. ३ 'आदरेण' इ. पा॰. ४ अत्र भरतापेक्षया लक्ष्मणस्य ज्येष्ठत्वमेव कवेरभिमतमिति साधु केचिन्मन्यन्ते । व्युत्क्रम्य लक्ष्मणमित्यनेनाग्रेकरणीयस्य लक्ष्मणवन्दनस्यैव प्रकारान्तरेण स्फुटं प्रतीयते । तथा च सौमित्रिणा इत्यनन्तरं स चेत्यस्योपादानं सौमित्रिमेव वक्ति । एवं च नम्रशिरसमेनमिति विशेषणद्वयं भरतविशेषणतयैव सम्यक् संगच्छते इत्यलं प्रासङ्गिकेन । वस्तुतस्तु कवेरभिप्रायो रामायणविसंवाद्येव ।

विसर्गे '। दैवादिकात्कर्तरि लिट्। **नम्रशिरसं** प्रणतं **एनं** सौमित्रिम् **उत्थाप्य भृशं** गाढं **आलिलिङ्ग च**। किं कुर्वन्। रूढेन्द्रजित्प्रहरणव्रणैः कर्कशेन [ **रूढेन्द्रजित्प्रहरणव्रणकर्कशेन**] **अस्य** सौमित्रेः **उरःस्थलेन भुजमध्यं** स्वकीयं **क्लिश्नन्निव** पीडयन्निव। क्लिश्नातिरयं सकर्मकः। ' क्लिश्नाति भुवनत्रयम् ' इति दर्शनात्। ननु रामायणे— ' ततो लक्ष्मणमासाद्य वैदेहीं च परंतपः। अभिवाद्य ततः प्रीतो भरतो नाम चाब्रवीत् ॥ ' इति भरतस्य कानिष्ठ्यं प्रतीयते। किमर्थं ज्यैष्ठ्यमवलम्ब्यानार्जवेन श्लोको व्याख्यातः। सत्यम्। किं तु रामायणश्लोकार्थष्टीकाकृतोक्तः श्रूयताम्। ' ततो लक्ष्मणमासाद्य-' इत्यादिश्लोके आसादनं लक्ष्मणवैदेह्योः अभिवादनं तु वैदेह्या एव। अन्यथा पूर्वोक्तं भरतस्य ज्यैष्ठ्यं विरुध्येतेति ॥

रामाज्ञया हरिचमूपतयस्तदानीं
कृत्वा मनुष्यवपुरारुरुहुर्गजेन्द्रान्।
तेषु क्षरत्सु बहुधा मदवारिधाराः
शैलाधिरोहणसुखान्युपलेभिरे ते ॥ ७४ ॥

**तदानीं हरिचमूपतयः रामाज्ञया मनुष्यवपुः कृत्वा गजेन्द्रान् आरुरुहुः। बहुधा मदवारिधाराः क्षरत्सु** वर्षत्सु **तेषु** गजेन्द्रेषु **ते** कपियूथनाथाः **शैलाधिरोहणसुखानि उपलेभिरे** अनुबभूवुः ॥

सानुप्लवः प्रभुरपि क्षणदाचराणां
भेजे रथान्दशरथप्रभवानुशिष्टः।
मायाविकल्परचितैरपि ये तदीयै-
र्न स्यन्दनैस्तुलितकृत्रिमभक्तिशोभाः ॥ ७५ ॥

**सानुप्लवः** सानुगः। ' अभिसारस्त्वनुसरः सहायोऽनुप्लवोऽनुगः ' इति। यादवः। **क्षणदाचराणां प्रभुः** विभीषणः **अपि**। प्रभवत्यस्मादिति प्रभवो जनकः। दशरथः प्रभवो यस्य स दशरथप्रभवो रामः। तेनानुशिष्टः आज्ञप्तः [ **दशरथप्रभवानुशिष्टः** ] सन् **रथान्भेजे**। तानेव विशिनष्टि—ये रथाः **मायाविकल्परचितैः** संकल्पविशेषनिर्मितैः **अपि तदीयैः** विभीषणीयैः **स्यन्दनैः** रथैः **तुलितकृत्रिमभक्तिशोभाः** तुलिता समीकृता कृत्रिमा क्रियया निर्वृत्ता भक्तीनां शोभा येषां ते तथोक्ताः **न** भवन्ति। तेऽपि तत्साम्यं न लभन्त इत्यर्थः। कृत्रिमेत्यत्र ' ड्वितः क्त्रिः ' इति क्त्रिप्रत्ययः। ' क्त्रेर्मम्नित्यम् ' इति ममागमः ॥

भूयस्ततो रघुपतिर्विलसत्पताक-
मध्यास्त कामगति सावरजो विमानम्।

---

१ येषु इ० पा० २ सप्तधा इत्यर्थः। तदुक्तं पालकाप्ये-' करात्कटाभ्यां मेढ्राच्च नेत्राभ्यां च मदस्रुतिः। इति। ३ ' रथम् ' ' अनुशिष्टम् ' इ०, रचितैः-' रचनैः ' इ. पा० ४ निःस्यन्दनैः.

दोपातनं बुधबृहस्पतियोगदृश्य-
स्तारापतिस्तरलविद्युदिवाभ्रवृन्दम् ॥ ७६ ॥

ततो रघुपतिः सावरजः भरतलक्ष्मणसहितः सन् । विलसत्पताकं कामेनेच्छानुसारेण गतिर्यस्य तत् [ कामगति ] विमानं भूयः पुनरपि । बुधबृहस्पतिभ्यां योगेन दृश्यः [ बुधबृहस्पतियोगदृश्यः ] दर्शनीयः तारापतिः चन्द्रो दोषाभवं दोपातनम् । 'सायंचिरंप्राह्णे-' इत्यादिना दोषाशब्दादव्ययाट्ट्युप्रत्ययः । तरलविद्युत् चञ्चलतडिद् अभ्रवृन्दम् इव । अध्यास्त अधिष्ठितवान् ॥

तत्रेश्वरेण जगतां प्रलयादिवोर्वीं
वर्षात्ययेन रुचमभ्रघनादिवेन्दोः ।
रामेण मैथिलसुतां दशकण्ठकृच्छ्रा-
त्प्रत्युद्धृतां धृतिमतीं भरतो ववन्दे ॥ ७७ ॥

तत्र विमाने । जगताम् ईश्वरेण आदिवराहेण प्रलयाद् उर्वीम् इव । वर्षात्ययेन शरदागमेन अभ्रघनात् मेघसंघातात् इन्दोः रुचं चन्द्रिकाम् इव रामेण दशकण्ठ एव कृच्छ्रं संकटं तस्मात् [ दशकण्ठकृच्छ्रात् ] प्रत्युद्धृतां धृतिमतीं संतोषवतीं मैथिलसुतां सीतां भरतः ववन्दे ॥

लङ्केश्वरप्रणतिभङ्गदृढव्रतं त-
द्वन्द्यं युगं चरणयोर्जनकात्मजायाः ।
ज्येष्ठानुवृत्तिजटिलं च शिरोऽस्य साधो-
रन्योन्यपावनमभूदुभयं समेत्य ॥ ७८ ॥

लङ्केश्वरस्य रावणस्य प्रणतीनां भङ्गेन निरासेन दृढव्रतं अखण्डि-पातिव्रत्यम् [ लङ्केश्वरप्रणतिभङ्गदृढव्रतम् ] अत एव वन्द्यं तज्जनकात्मजायाः चरणयोः युगं ज्येष्ठानुवृत्त्या जटिलं [ ज्येष्ठानुवृत्तिजटिलं ] जटायुक्तं साधोः सज्जनस्य अस्य भरतस्य शिरश्च इति उभयं समेत्य मिलित्वान्योन्यस्य पावनं [ अन्योन्यपावनं ] शोधकं अभूत् ॥

क्रोशार्धं प्रकृतिपुरःसरेण गत्वा
काकुत्स्थः स्तिमितजवेन पुष्पकेण ।
शत्रुघ्नप्रतिविहितोपकार्यमार्यः
साकेतोपवनमुदारमध्युवास ॥ ७९ ॥

आर्यः पूज्यः । काकुत्स्थः रामः । प्रकृतयः प्रजाः पुरःसर्यो यस्य तेन

---

१ 'मागधिरः' इ. पा०. २ 'द्वन्द्यम्.' ३ रुचिम्. ४ अभ्यु०. ५ प्रणय. ६ ०सरोऽपि' इ. पा०

[ प्रकृतिपुरःसरेण ] **स्तिमितजवेन** मन्दवेगेन **पुष्पकेण** । क्रोशोऽध्वपरिमाणविशेषः । **क्रोशार्धं** क्रोशैकदेशं **गत्वा** शत्रुघ्नेन प्रतिविहिताः सज्जिता उपकार्याः पटभवनानि यस्मिंस्तत् [ **शत्रुघ्नप्रतिविहितोपकार्यम्** ] **उदारं** महत्साकेतस्यायोध्याया उपवनम् [ **साकेतोपवनम्** ] **अध्युवास** अधितष्ठौ । 'साकेतः स्यादयोध्यायां कोसलानन्दिनी तथा ।' इति यादवः ॥

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीवनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये **दण्डकाप्रत्यागमनः** नाम त्रयोदशः सर्गः ।

---

## चतुर्दशः सर्गः ।

संजीवनं मैथिलकन्यकायाः सौन्दर्यसर्वस्वमहानिधानम् ।
शशाङ्कपङ्केरुहयोः समानं रामस्य वन्दे रमणीयमास्यम् ॥[1]

**भर्तुः प्रणाशादथ शोचनीयं दशान्तरं तत्र समं प्रपन्ने ।**
**अपश्यतां दाशरथी जनन्यौ छेदादिवोपघ्नतरोर्व्रतत्यौ ॥ १ ॥**[2]

**अथ** उपवनाधिष्ठानानन्तरं **दाशरथी** रामलक्ष्मणौ । **उपघ्नतरोः** आश्रयवृक्षस्य । 'उपघ्न आश्रये' इति निपातः । तस्य **छेदाद् व्रतत्यौ** लते **इव** । 'वल्ली तु व्रततिर्लता' इत्यमरः । **भर्तुः** दशरथस्य **प्रणाशाच्छोचनीयं दशान्तरम्** अवस्थान्तरम् । 'दशावर्ताववस्थायां' इति विश्वः । **प्रपन्ने** प्राप्ते **जनन्यौ** कौसल्यासुमित्रे **तत्र** साकेतोपवने **समं** युगपद् **अपश्यताम्** । दृशेः कर्तरि लङ् ॥

**उभावुभाभ्यां प्रणतौ हतारी यथाक्रमं विक्रमशोभिनौ तौ ।**
**विस्पष्टमस्रान्धतया[3] न दृष्टौ ज्ञातौ सुतस्पर्शसुखोपलम्भात्[4] ॥ २ ॥**

**यथाक्रमं** स्वस्वमातृपूर्वकं **प्रणतौ** नमस्कृतवन्तौ **हतारी** हतशत्रुकौ **विक्रमशोभिनौ तौ उभौ** रामलक्ष्मणौ **उभाभ्यां** मातृभ्यामस्रैरश्रुभिरन्धतया [ **अस्रान्धतया** ] हेतुना । 'अस्रमश्रु च शोणितम्' इति यादवः । **विस्पष्टं न दृष्टौ** किं तु सुतस्पर्शेन यत्सुखं तस्योपलम्भादनुभवात् [ **सुतस्पर्शसुखोपलम्भात्** ] **ज्ञातौ** ॥

---

१ रामस्य रमणीयमास्यं वन्दे । कीदृक् तदित्याह—मैथिलकन्यकायाः सीतायाः संजीवनं तद्दृष्ट्वा तस्या मुखस्य विकसनात् । पुनश्च सौन्दर्यसारसमुदायमहानिकेतम् । शशाङ्कपङ्केरुहयोः संहतयोः न तु पार्थक्येन उभयत्र लक्ष्म्या वैगुण्येनैव सत्त्वात् । समानम् । पद्मगुणैः सौगन्ध्यादिभिश्चन्द्रगुणैरमृतवदानन्दकरत्वादिभिर्युक्तमित्यर्थः । तदुक्तं तत्रभवता कालिदासेन—'चन्द्रं गता पद्मगुणान्न भुङ्क्ते पद्मं गता चान्द्रमसीमभिख्यां [ लक्ष्मीः ]' इति ।

२ इतु. अयं श्लोकोऽन्यथा पठ्यते चारि० दिभिर्यथा—प्रत्यागतौ तत्र चिरप्रवासादपश्यतां दाशरथी जनन्यौ । कुमुद्वतीशीतमरीचिलेखे दिवेव रूपान्तरदुर्विभाव्ये ॥ ३ विशिष्टमश्रान्ततया. ४ 'रसो०' इ.पा०

आनन्दजः शोकजमश्रु बाष्पस्तयोरशीतं शिशिरो बिभेद ।
गङ्गासरय्वोर्जलमुष्णतप्तं हिमाद्रिनिर्[1]स्यन्द इवावतीर्णः ॥ ३ ॥

तयोः मात्रोः आनन्दजः शिशिरः बाष्पः शोकजम् अशीतम् उष्णम् अश्रु । उष्णतप्तं ग्रीष्मतप्तं गङ्गासरय्वोः जलं कर्म अवतीर्णः हिमाद्रेर्निस्यन्दो [ हिमाद्रिनिस्यन्दः ] निर्झरः इव । बिभेद । आनन्देन शोकस्तिरस्कृत इत्यर्थः ॥

ते पुत्रयोर्नैर्ऋतशस्त्रमार्गा[2]नार्द्रानिवाङ्गे सदयं स्पृशन्त्यौ ।
अपीप्सितं क्षत्रकुलाङ्गनानां न वीरसूशब्दमकामयेताम् ॥ ४ ॥

ते मातरौ पुत्रयोःअङ्गे शरीरे नैर्ऋतशस्त्राणां राक्षसशस्त्राणां मार्गान् व्रणान् [ नैर्ऋतशस्त्रमार्गान् ] आर्द्रान् सरसान् इव सदयं स्पृशन्त्यौ क्षत्रकुलाङ्गनानाम् ईप्सितम् इष्टम् अपि वीरसूर्वीरमातेति शब्दं [ वीरसूशब्दं ] न अकामयेताम् । वीरप्रसवो दुःखहेतुरिति भावः ॥

क्लेशावहा भर्तुरलक्षणाहं सीतेति नाम स्वमुदीरयन्ती[3] ।
स्वर्गप्रति[4]ष्ठस्य गुरोर्महिष्यावभक्तिभेदेन वधूर्ववन्दे ॥ ५ ॥

आवहतीत्यावहा । भर्तुः क्लेशावहा क्लेशकारिणी । अत एव अलक्षणा अहं सीता इति स्वं नाम उदीरयन्ती स्वर्गः प्रतिष्ठास्पदं यस्य तस्य [ स्वर्गप्रतिष्ठस्य ] स्वर्गस्थितस्य गुरोः श्वशुरस्य महिष्यौ श्वश्र्वौ वधूः स्नुषा । 'वधूः स्नुषा वधूर्जाया' इत्यमरः । अभक्तिभेदेन ववन्दे । स्वर्गप्रतिष्ठस्येत्यनेन श्वश्रूवैधव्यदर्शनदुःखं सूचितम् ॥

उत्तिष्ठ वत्से ननु सानुजोऽसौ वृत्तेन भर्ता शुचिना तवैव ।
कृच्छ्रं महत्तीर्ण इति प्रियार्हां तामूचतुस्ते प्रियमप्यमिथ्या ॥ ६ ॥

ननु वत्से उत्तिष्ठ । असौ सानुजो भर्ता तव एव शुचिना वृत्तेन महत्कृच्छ्रं दुःखं तीर्णः तीर्णवान् इति प्रियार्हां तां वधूं प्रियम् अपि अमिथ्या सत्यं ते श्वश्र्वौ ऊचतुः । उभयं दुर्वचमिति भावः ॥

अथाभिषेकं रघुवंशकेतोः प्रारब्धमानन्दजलैर्जनन्योः ।
निर्वर्तयामासुरमात्यवृद्धास्तीर्थाहृतैः काञ्चनकुम्भतोयैः ॥ ७ ॥

अथ जनन्योः आनन्दजलैः आनन्दबाष्पैः प्रारब्धं प्रक्रान्तं रघुवंशकेतोः रामस्य अभिषेकम् अमात्यवृद्धाः तीर्थेभ्यो गङ्गाप्रमुखेभ्य आहृतैरानीतैः [ तीर्थाहृतैः ] काञ्चनकुम्भतोयैः निर्वर्तयामासुः निष्पादयामासुः ॥

सरित्समुद्रान्सरसीश्च गत्वा रक्षःकपीन्द्रैरुपपादितानि ।
तस्यापतन्मूर्ध्नि जलानि जिष्णोर्विन्ध्यस्य मेघप्रभवा इवापः ॥ ८ ॥

१ निष्यन्द. २ 'धावान्'; ०धावान् स्थिर-चिर-प्ररूढानपि वत्सलत्वात् । आर्द्रौ...स्पृशन्त्यौ प्रसूतमयोर्जन्म समर्थयेताम् ॥ इ. पा०. ३ 'उदाहरन्ती' इ. पा० ४ स्वर्गं प्रविष्टस्य' इ. पा०. ५ स्पष्टं. ६ 'प्रियं मनोहारि च दुर्लभं वचः' इति भारविः. ७ प्रवर्तया०, निवर्त०.

रक्षःकपीन्द्रैः सरितो गङ्गाद्याः समुद्रान्पूर्वादीन् [ सरित्समुद्रान् ] सरसीः मानसादीः च गत्वा । उपपादितानि उपनीतानि जलानि जिष्णोः जयशीलस्य । ' ग्लाजिस्थश्च ग्स्नुः ' इति ग्स्नुप्रत्ययः । तस्य रामस्य मूर्ध्नि । विन्ध्यस्य विन्ध्याद्रेर्मूर्ध्नि मेघप्रभवाः आपः इव । अपतन् ॥

तपस्विवेषक्रिययापि तावद्यः प्रेक्षणीयः सुतरां बभूव ।
राजेन्द्रनेपथ्यविधानशोभा तस्योदितासीत्पुनरुक्तदोषा ॥ ९ ॥

यः रामः तपस्विवेषक्रिययापि तपस्विवेषरचनयापि सुतरां अत्यन्तं प्रेक्षणीयः तावत् दर्शनीय एव बभूव । तस्य राजेन्द्रनेपथ्यविधानेन राजवेषरचनया उदिता या शोभा सा [ राजेन्द्रनेपथ्यविधानशोभा ] पुनरुक्तं नाम दोषो यस्याः सा पुनरुक्तदोषा द्विगुणा आसीत् ॥

स मौलरक्षोहरिभिः ससैन्यस्तूर्यस्वनानन्दितपौरवर्गः ।
विवेश सौधोद्गतलाजवर्षामुत्तोरणामन्वयराजधानीम् ॥ १० ॥

स रामः ससैन्यः तूर्यस्वनैरानन्दितपौरवर्गः [ तूर्यस्वनानन्दितपौरवर्गः ] सन् । [ मौलरक्षोहरिभिः ] मूले भवा मौला मन्त्रिवृद्धास्तै रक्षोभिर्हरिभिश्च सह सौधेभ्य उद्गतलाजवर्षाम् [ सौधोद्गतलाजवर्षाम् ] उत्तोरणाम् अन्वयराजधानीम् अयोध्यां विवेश प्रविष्टवान् ॥

सौमित्रिणा सावरजेन मन्दमाधूतवालव्यजनो रथस्थः ।
धृतातपत्रो भरतेन साक्षादुपायसंघात इव प्रवृद्धः ॥ ११ ॥

सावरजेन शत्रुघ्नयुक्तेन सौमित्रिणा मन्दं आधूते वालव्यजने चामरे यस्य स [ आधूतवालव्यजनः ] रथस्थः भरतेन धृतातपत्रः एवं च चतुर्व्यूहो रामः प्रवृद्धः साक्षादुपायानां सामादीनां संघातः [ साक्षादुपायसंघातः ] इव समदृश्यत । विवेशेति पूर्वेण संबन्धः ॥

प्रासादकालागुरुधूमराजिस्तस्याः पुरो वायुवशेन भिन्ना ।
वनान्निवृत्तेन रघूद्वहेन मुक्ता स्वयं वेणिरिवाबभासे ॥ १२ ॥

वायुवशेन भिन्ना [ प्रासादकालागुरुधूमराजिः ] प्रासादे यः कालागुरुधूमस्तस्य राजी रेखा । वनान्निवृत्तेन रघूत्तमेन रामेण स्वयं मुक्ता तस्याः पुरः पुर्याः वेणिः इव । आबभासे । पुरोऽपि पतिव्रतासमाधिरुक्तः । ' न प्रोषिते तु संस्कुर्यान्न वेणीं च प्रमोचयेत् ' इति हारीतः ॥

---

१ नरेन्द्र. २ पुनरुक्ति. ३ 'किमिव हि मधुराणां मण्डनं नाकृतीनाम्' इति भाव:. ४ ॰हरिमिश्र॰, मौलि-पौर-रक्षो-मिश्र॰ इ॰, ॰पौरवर्ग-पौरवर्गां; ॰वर्ग-राजमार्गम्, इ. पा. ५ प्रवृत्तः, प्रसिद्धः इ. पा॰ ६ धूर॰ इ., वायुवशेन-वशात् च, विभिन्ना,-वितुन्ना इ. च पा॰. ७ रघूत्तमेन इ॰

**श्वश्रूजनानुष्ठितचारुवेषां कर्णीरथस्थां रघुवीरपत्नीम् ।**
**प्रासादवातायनदृश्यबन्धैः साकेतनार्योऽञ्जलिभिः प्रणेमुः ॥ १३ ॥**

श्वश्रूजनैरनुष्ठितचारुवेषां [ **श्वश्रूजनानुष्ठितचारुवेषां** ] कृतसौम्यनेपथ्याम् । 'आकल्पवेषौ नेपथ्यम्' इत्यमरः । कर्णीरथः स्त्रीयोग्योऽल्परथः । 'कर्णीरथः प्रवहणं डयनं रथगर्भके' इति यादवः । तत्रस्थां [ **कर्णीरथस्थां** ] **रघुवीरपत्नीं** सीतां **साकेतनार्यः** [ **प्रासादवातायनदृश्यबन्धैः** ] प्रासादवातायनेषु दृश्यबन्धैर्लक्ष्यपुटैः **अञ्जलिभिः प्रणेमुः** ॥

**स्फुरत्प्रभामण्डलमानुसूयं सा बिभ्रती शाश्वतमङ्गरागम् ।**
**रराज शुद्धेति पुनः स्वपुर्यै संदर्शिता वह्निगतेव भर्त्रा ॥ १४ ॥**

**स्फुरत्प्रभामण्डलम् आनुसूयं** अनुसूयया दत्तं **शाश्वतं** सनातनं **अङ्गरागं बिभ्रती सा** सीता **भर्त्रा स्वपुर्यै शुद्धा इति संदर्शिता पुनः वह्निगता इव रराज** ॥

**वेश्मानि रामः परिवर्हवन्ति विश्राण्य सौहार्दनिधिः सुहृद्भ्यः ।**
**बाष्पायमाणो बलिमन्निकेतमालेख्यशेषस्य पितुर्विवेश ॥ १५ ॥**

सुहृदो भावः सौहार्दं सौजन्यम् । 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य–' इत्युभयपदवृद्धिः । **सौहार्दनिधिः रामः सुहृद्भ्यः** सुग्रीवादिभ्यः **परिवर्हवन्ति** उपकरणवन्ति **वेश्मानि विश्राण्य** दत्त्वा **आलेख्यशेषस्य** चित्रमात्रशेषस्य **पितुः बलिमत्** पूजायुक्तं **निकेतं** गृहं **बाष्पायमाणः** बाष्पमुद्वमन् **विवेश** । 'बाष्पोष्मभ्यामुद्वमने' इति क्यङ्प्रत्ययः ॥

**कृताञ्जलिस्तत्र यदम्ब सत्यान्नाभ्रश्यत स्वर्गफलाद्गुरुर्नः ।**
**तच्चिन्त्यमानं सुकृतं तवेति जहार लज्जां भरतस्य मातुः ॥ १६ ॥**

**तत्र** निकेतने **कृताञ्जलिः** सन्रामः । हे **अम्ब नः गुरुः** पिता स्वर्गः फलं यस्य तस्मात् [ **स्वर्गफलात्** ] **सत्यात् न अभ्रश्यत** न भ्रष्टवानिति **यद् तद्** अभ्रंशनं **चिन्त्यमानं** विचार्यमाणं **तव सुकृतम्** । **इति** एवं प्रकारेण **भरतस्य मातुः** कैकेय्याः **लज्जां जहार** अपानयत् । राज्ञां प्रतिज्ञापरिपालनं स्वर्गसाधनमित्यर्थः । भरतग्रहणं तदपेक्षयापि कैकेय्यनुसरणद्योतनार्थम् ॥

**तथैव सुग्रीवविभीषणादीनुपाचरत्कृत्रिमसंविधाभिः ।**
**संकल्पमात्रोदितसिद्धयस्ते क्रान्ता यथा चेतसि विस्मयेन ॥ १७ ॥**

---

१ जनैः वल्गित॰ २ विमान, विशाल. ३ आनसूयम्; स्वपुर्यै–स्वपुर्याः इ. पा॰ ४ स्नेनाङ्गरागेण लिप्तसर्वावयवा साग्निमध्यगतेव रराज । तथा च रामायणे–अङ्गरागं च सीतायै ददौ दिव्यं शुभान्वता । न त्वदानेऽङ्गरागेण शोभा त्वां समदानने ॥ इ॰ 'अनुसूययादत्तोऽङ्गरागोऽप्यनुरूपसंगमे पर्जित. स्यादिति प्रसिद्धि.' इ॰ हे॰ ५ तथा स, तत्रैव. ६ उचित, उदय इ॰ पा॰

सुग्रीवविभीषणादीन् । संविधीयन्त इति संविधा भोग्यवस्तूनि । कृत्रिमसंविधाभिः तथा तेन प्रकारेण एव उपाचरत् च । यथा [ संकल्पमात्रोदितासिद्धयः ] संकल्पमात्रेणे-च्छामात्रेणोदितसिद्धयः ते सुग्रीवादयः चेतसि विस्मयेन क्रान्ताः आक्रान्ताः ॥

**सभाजनायोपगतान्स[1] दिव्यान्मुनीन्पुरस्कृत्य[2] हतस्य शत्रोः ।**
**शुश्राव तेभ्यः प्रभवादि वृत्तं स्वविक्रमे गौरवमादधानम्[3] ॥ १८ ॥**

स रामः सभाजनाय अभिवन्दनाय उपगतान् दिवि भवान् [ दिव्यान् ] मुनीन् अगस्त्यादीन् पुरस्कृत्य हतस्य शत्रोः रावणस्य प्रभवादि जन्मादिकं स्वविक्रमे गौरवं उत्कर्षं आदधानं वृत्तं तेभ्यः मुनिभ्यः शुश्राव श्रुतवान् । विजितोत्कर्षाज्जेतुरुत्कर्ष इत्यर्थः ॥

**प्रतिप्रयातेषु[4] तपोधनेषु सुखादविज्ञातगतार्धमासान् ।**
**सीतास्वहस्तोपहृता[5]ग्र्यपूजान्रक्षःकपीन्द्रान्विससर्ज रामः ॥ १९ ॥**

तपोधनेषु मुनिषु प्रतिप्रयातेषु प्रतिनिवृत्त्य गतेषु सत्सु सुखात् अविज्ञात एव गतोऽर्धमासो येषां तान् [ अविज्ञातगतार्धमासान् ] अनन्तरं सीतायाः स्वहस्तेनोपहृता दत्ताग्र्यपूजोत्तमसंभावना येभ्यस्तान् [ सीतास्वहस्तोपहृताग्र्यपूजान् ]। एतेन सौहार्दातिशय उक्तः । रक्षःकपीन्द्रान् रामः विससर्ज विसृष्टवान् ॥

**तच्चात्म[6]चिन्तासुलभं विमानं हृतं[7] सुरारेः सह जीवितेन ।**
**कैलासनाथोद्वहनाय भूयः पुष्पं दिवः पुष्पकमन्वमंस्त[8] ॥ २० ॥**

तत् च आत्मचिन्तासुलभं स्वेच्छामात्रलभ्यं सुरारेः रावणस्य जीवितेन सह हृतं दिवः पुष्पं पुष्पवदाभरणभूतं पुष्पकं विमानं भूयः पुनरपि [ कैलासनाथोद्वहनाय ] कैलासनाथस्य कुबेरस्योद्वहनाय अन्वमंस्त अनुज्ञातवान् । मन्यतेर्लुङ् । भूयोग्रहणेन पूर्वमप्येतत्कौबेरमेवेति सूच्यते ॥

**पितुर्नियोगाद्वनवासमेवं[9] निस्तीर्य रामः प्रतिपन्नराज्यः ।**
**धर्मार्थकामेषु समां[10] प्रपेदे यथा तथैवावरजेषु वृत्तिम् ॥ २१ ॥**

रामः एवं पितुः नियोगात् शासनात् वनवासं निस्तीर्य अनन्तरं प्रतिपन्नराज्यः प्राप्तराज्यः सन् । धर्मार्थकामेषु[11] यथा तथा एव अवरजेषु समां वृत्तिं प्रपेदे । अवैषम्येण व्यवहृतवानित्यर्थः ॥

**सर्वासु मातृष्वपि[12] वत्सलत्वात्स निर्विशेषप्रतिपत्तिरासीत् ।**
**षडाननापीतपयोधरासु नेता चमूनामिव कृत्तिकासु ॥ २२ ॥**

स रामः वत्सलत्वात् स्निग्धत्वात् । न तु लोकप्रतीत्यर्थम् । 'स्निग्धस्तु वत्सलः' इत्यमरः । सर्वासु मातृषु अपि निर्विशेषप्रतिपत्तिः तुल्यसत्कारः आसीत् ।

---

१ सुवि०, सहिष्णुः. २ नमस्कृत्य. ३ ०धानः. ४ इति प्र० ५ ०वृता० ६ तदात्म०, अथात्म. ७ पूतं. ८ अन्वयुङ्क्त इ० पा. ९ सदु.खं. १० समं. ११ उक्तं च–'धर्मार्थकामाः सममेव सेव्या यस्त्वेकसेवी स जनो जघन्यः ।' इति. १२ ष्वनिव.

कथमिव । **चमूनां नेता** षण्मुखः [ **षडाननापीतपयोधरासु** ] षड्भिराननैरापीताः पयोधराः स्तना यासां तासु **कृत्तिकासु इव** ॥

**तेनार्थवाँल्लोभपराङ्मुखेन तेन घ्नता विघ्नभयं क्रियावान् ।**
**तेनास लोकः पितृमान्विनेत्रा तेनैव शोकापनुदेन पुत्री ॥ २३ ॥**

**लोकः लोभपराङ्मुखेन** वदान्येन **तेन** रामेण **अर्थवान्** धनिकः **आस** बभूव । तिङन्तप्रतिरूपकमव्ययमेतत् । विघ्नेभ्यो भयं [ **विघ्नभयं** ] **घ्नता** नुदता **तेन क्रियावान्** अनुष्ठानवान् आस । **विनेत्रा** नियामकेन **तेन पितृमान्** आस । पितृवन्नियच्छतीत्यर्थः । शोकमपनुदतीति शोकापनुदो दुःखस्य हर्ता तेन [ **शोकापनुदेन** ] । 'तुन्दशोकयोः परिमृजापनुदोः' इति कप्रत्ययः । **तेन एव पुत्री** पुत्रवानास । पुत्रवदानन्दयतीत्यर्थः ॥

**स पौरकार्याणि समीक्ष्य काले रेमे विदेहाधिपतेर्दुहित्रा ।**
**उपस्थितश्चारु वपुस्तदीयं कृत्वोपभोगोत्सुकयेव लक्ष्म्या ॥ २४ ॥**

**स** रामः **काले** अवसरे पौराणां कार्याणि [ **पौरकार्याणि** ] प्रयोजनानि **समीक्ष्य विदेहाधिपतेः दुहित्रा** सीतया । **उपभोगोत्सुकया** अत एव **तदीयं** सीतासंबन्धि **चारु वपुः कृत्वा** स्थितया **लक्ष्म्या इव । उपस्थितः** संगतः सन् **रेमे** । 'उपस्थानं तु संगतिः' इति यादवः ॥

**तयोर्यथाप्रार्थितमिन्द्रियार्थानासेदुषोः सद्मसु चित्रवत्सु ।**
**प्राप्तानि दुःखान्यपि दण्डकेषु संचिन्त्यमानानि सुखान्यभूवन् ॥२५॥**

**चित्रवत्सु** वनवासवृत्तान्तालेख्यवत्सु **सद्मसु यथाप्रार्थितं** यथेष्टं **इन्द्रियार्थान्** इन्द्रियविषयाञ्शब्दादीन् **आसेदुषोः** प्राप्तवतोः **तयोः** सीतारामयोः **दण्डकेषु** दण्डकारण्येषु **प्राप्तानि दुःखानि अपि** विरहविलापान्वेषणादीनि **संचिन्त्यमानानि** स्मर्यमाणानि **सुखानि अभूवन्** । स्मारकं तु चित्रदर्शनमिति द्रष्टव्यम् ॥

**अथाधिकस्निग्धविलोचनेन मुखेन सीता शरपाण्डुरेण ।**
**आनन्दयित्री परिणेतुरासीदनक्षरव्यञ्जितदौहृदेन ॥ २६ ॥**

**अथ सीता अधिकस्निग्धविलोचनेन** अत्यन्तमसृणलोचनेन [ **शरपाण्डुरेण** ] शरवत्तृणविशेषवत्पाण्डुरेणात एवानक्षरमवाग्व्यापारं यथा भवति तथा व्यञ्जितं दौहृदं

१ तदुक्तं म. भा०—शरस्तम्बे महात्मानमनलात्मजमीश्वरम् । ममायमिति ता. सर्वाः पुत्रार्थिन्योऽभिचुक्रुशुः ॥ तासां विदित्वा भावं तं मातॄणां भगवान्प्रभुः । प्रस्नुतानां पयः षड्भिर्वदनैरपिबत्तदा ॥ शल्यप. गदाध्या. श्लो. ६०–६२. रामायणे च—तं कुमारं ततो जातं सेन्द्राः सहमरुद्गणाः । क्षीरसंभावनार्थाय कृत्तिकाः समयोजयन् ॥ ....प्रादुर्भूतं ततः क्षीरं कृत्तिकानामनुत्तमम् । षण्णां षडाननो भूत्वा जग्राह स्तनजं पयः ॥ इ०. २ अनुष्टुप्. श्लोकः शाकुन्तले—येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना । स स पापादृते तासां दुष्यन्त इति घुष्यताम् ॥ ३ समास्य, विलोक्य. ४ ॰पार्थम्. ५ सुखीबभूवुः इ. पा०. ६ स्नेह. ७ परि०. ८ दोहदेन इ. पा०.

गर्भो येन तेन [ अनक्षरव्यञ्जितदौर्हृदेन ] मुखेन परिणेतुः पत्युः आनन्दयित्री आसीत् ॥

तामङ्कमारोप्य कृशाङ्गयष्टिं वर्णान्तराक्रान्तपयोधराग्राम् ।
विलज्जमानां रहसि प्रतीतः पप्रच्छ रामां रमणोऽभिलाषम् ॥ २७ ॥

प्रतीतः हर्षात्प्रीतः । रमयतीति रमणः । प्रियां कृशाङ्गयष्टिं वर्णान्तरेण नीलिम्नाक्रान्तपयोधराग्रां [ वर्णान्तराक्रान्तपयोधराग्रां ] विलज्जमानां तां रामां रहसि अङ्कम् आरोप्य अभिलाषं मनोरथं पप्रच्छ । एतच्च ' दोहदस्याप्रदानेन गर्भो दोषमवाप्नुयात् ' इति शास्त्रात् । न तु लौल्यादित्यनुसंधेयम् ॥

सा दष्टनीवारबलीनि हिंस्रैः संबद्धवैखानसकन्यकानि ।
इयेष भूयः कुशवन्ति गन्तुं भागीरथीतीरतपोवनानि ॥ २८ ॥

सा सीता । हिंस्रैः दष्टा नीवारा एव बल्यो येषु तानि [ दष्टनीवारबलीनि ] । तिर्यग्भ्यः शुकादिदानं बलिः । संबद्धाः कृतसख्या वैखानसानां कन्यका येषु तानि [ संबद्धवैखानसकन्यकानि ] कुशवन्ति भागीरथीतीरतपोवनानि भूयः पुनरपि गन्तुं इयेष अभिललाष ॥

तस्यै प्रतिश्रुत्य रघुप्रवीरस्तदीप्सितं पार्श्वचरानुयातः ।
आलोकयिष्यन्मुदितामयोध्यां प्रासादमभ्रंलिहमारुरोह ॥ २९ ॥

रघुप्रवीरः रामः तस्यै सीतायै तत् पूर्वोक्तम् ईप्सितं मनोरथं प्रतिश्रुत्य पार्श्वचरैस्तत्कालोचितैरनुयातः [ पार्श्वचरानुयातः ] सन् मुदितां ताम् अयोध्याम् आलोकयिष्यन् । अभ्रं लेढीति अभ्रंलिहं अभ्रंकषं प्रासादमारुरोह । ' वहाभ्रे लिहः ' इति खश्प्रत्ययः । ' अरुर्द्विषदजन्तस्य मुम् ' इति मुमागमः ॥

ऋद्धापणं राजपथं स पश्यन्विगाह्यमानां सरयूं च नौभिः ।
विलासिभिश्चाध्युषितानि पौरैः पुरोपकण्ठोपवनानि रेमे ॥ ३० ॥

स रामः । ऋद्धाः समृद्धा आपणाः पण्यभूमयो यस्मिंस्तं [ ऋद्धापणं ] राजपथम् । नौभिः संचारिणीभिः विगाह्यमानां सरयूं च । पौरैर्विलासिभिः अध्युषितानि पुरोपकण्ठोपवनानि च पश्यन्रेमे । विलासिन्यश्च विलासिनश्च विलासिनः । ' पुमान्स्त्रिया ' इत्येकशेषः ॥

स किंवदन्तीं वदतां पुरोगः स्ववृत्तमुद्दिश्य विशुद्धवृत्तः ।
सर्पाधिराजोरुभुजोऽपसर्पं पप्रच्छ भद्रं विजितारिभद्रः ॥ ३१ ॥

---

१ उक्तं च—दैवमप्याहितं तस्य हिताय हितमन्यकम् । श्रद्धाविधाने गर्भस्य विकृतिश्च्युतिरेव वा ॥ इति । २ 'फलानि' इ., हिंस्रैः—हंसैः; संबद्ध—समृद्ध इ. च पा०. अत्र रामायणम्—तपोवनानि पुण्यानि द्रष्टुमिच्छामि राघव ॥ गङ्गातीरोपविष्टानामृषीणामुग्रतेजसाम् । फलमूलाशिनां देव पादमूलेषु वर्तितुम् ॥ एष मे परमः कामो यन्मूलफलभोजिनाम् । अप्येकरात्रं काकुत्स्थ निवसेयं तपोवने ॥ ४ विलो० ५ विगाह्य० ( विगाह्यमानामवगाह्यमाना इ. चारि० ), ६ निहत ; विहित इ. पा०.

वदतां वाग्मिनां पुरोगः श्रेष्ठः विशुद्धवृत्तः । सर्पाधिराजः शेषस्तद्वदुरू भुजौ यस्य स [ सर्पाधिराजोरुभुजः ] विजितारिभद्रः विजितारिश्रेष्ठः स रामः स्ववृत्तम् उद्दिश्य भद्रं भद्रनामकम् अपसर्पं चरं किंवदन्तीं जनवादं पप्रच्छ । 'अपसर्पश्चरः स्पशः इति'। 'किंवदन्ती जनश्रुतिः' इति चामरः ॥

निर्बन्धपृष्टः स जगाद सर्वं स्तुवन्ति पौराश्चरितं त्वदीयम् ।
अन्यत्र रक्षोभवनोषितायाः परिग्रहान्मानवदेव देव्याः ॥ ३२ ॥

निर्बन्धेनाग्रहेण पृष्टः [ निर्बन्धपृष्टः ] सः अपसर्पः जगाद । किमिति । हे मानवदेव रक्षोभवन उषिताया [ रक्षोभवनोषितायाः ] देव्याः सीतायाः परिग्रहात् स्वीकारात् अन्यत्र इतरांशे । तं वर्जयित्वेत्यर्थः । त्वदीयं सर्वं चरितं पौराः स्तुवन्ति ॥

कलत्रनिन्दागुरुणा किलैवमभ्याहतं कीर्तिविपर्ययेण ।
अयोघनेनाय इवाभितप्तं वैदेहिबन्धोर्हृदयं विदद्रे ॥ ३३ ॥

एवं किल कलत्रनिन्दया गुरुणा दुर्वहेण [ कलत्रनिन्दागुरुणा ] कीर्तिविपर्ययेण अपकीर्त्या अभ्याहतं वैदेहिबन्धोः वैदेहिवल्लभस्य । 'ङ्यापोः संज्ञाछन्दसोर्बहुलम्' इति ह्रस्वः । कालिदास इतिवत् । हृदयम् अयोघनेन अभितप्तं संतप्तम् अयः इव विदद्रे विदीर्णम् । कर्तरि लिट् ॥

किमात्मनिर्वादकथामुपेक्षे जायामदोषामुत संत्यजामि ।
इत्येकपक्षाश्रयविक्लवत्वादासीत्स दोलाचलचित्तवृत्तिः ॥ ३४ ॥

आत्मनो निर्वादोऽपवाद एव कथा तां [ आत्मनिर्वादकथां ] किम् उपेक्षे । उत अदोषां साध्वीं जायां संत्यजामि । उभयत्रापि प्रश्ने लोट् । इति एकपक्षाश्रयेऽन्यतरपक्षपरिग्रहे विक्लवत्वात् अपरिच्छेतृत्वात् [ एकपक्षाश्रयविक्लवत्वात् ] स रामः दोलेव चला चित्तवृत्तिर्यस्य स [ दोलाचलचित्तवृत्तिः ] आसीत् ॥

निश्चित्य चानन्यनिवृत्ति वाच्यं त्यागेन पत्न्याः परिमार्ष्टुमैच्छत् ।
अपि स्वदेहात्किमुतेन्द्रियार्थाद्यशोधनानां हि यशो गरीयः ॥ ३५ ॥

किं च । वाच्यम् अपवादम् । नास्त्यन्येन त्यागातिरिक्तोपायेन निवृत्तिर्यस्य तत् अनन्यनिवृत्ति निश्चित्य पत्न्याः त्यागेन परिमार्ष्टुं परिहर्तुम् ऐच्छत् । तथा हि । यशोधनानां पुंसां स्वदेहादपि यशो गरीयः गुरुतरम् । इन्द्रियार्थात् स्रक्चन्दनवनितादेरिन्द्रियविषयात्पुनः इति किमुत वक्तव्यम् । 'पञ्चमी विभक्ते' इत्युप-

स संनिपात्यावरजान्हतौजास्तद्विक्रियादर्शनलुप्तहर्षान् ।
कौलीनमात्माश्रयमाचचक्षे तेभ्यः पुनश्चेदमुवाच वाक्यम् ॥ ३६ ॥

हतौजाः निस्तेजस्कः स रामस्तस्य रामस्य विक्रियादर्शनेन लुप्तहर्षान् [ तद्विक्रियादर्शनलुप्तहर्षान् ] अवरजान् संनिपात्य संगमय्य आत्माश्रयं स्वविषयकं कौलीनं निन्दां तेभ्यः आचचक्षे । पुनः इदं वाक्यम् उवाच च ॥

राजर्षिवंशस्य रविप्रसूतेरुपस्थितः पश्यत कीदृशोऽयम् ।
मत्तः सदाचारशुचेः कलङ्कः पयोदवातादिव दर्पणस्य ॥ ३७ ॥

रवेः प्रसूतिर्जन्म यस्त तस्य [ रविप्रसूतेः ] राजर्षिवंशस्य सदाचारशुचेः सद्वृत्ताच्छुद्धात् मत्तः मत्सकाशात् । दर्पणस्य पयोदवातात् इव अम्भःकणादित्यर्थः । कीदृशः अयं कलङ्कः उपस्थितः प्राप्तः पश्यत ॥

पौरेषु सोऽहं बहुलीभवन्तमपां तरंगेष्विव तैलबिन्दुम् ।
सोढुं न तत्पूर्वमवर्णमीशे आलानिकं स्थाणुमिव द्विपेन्द्रः ॥ ३८ ॥

सः अहम् । अपां तरंगेषु तैलबिन्दुमिव । पौरेषु बहुलीभवन्तं प्रसरन्तम् । स एव पूर्वो यस्य स तम् तत्पूर्वम् । अवर्णं अपवादम् । 'अवर्णाक्षेपनिर्वादपरीवादापवादवत् ।' इत्यमरः । द्विपेन्द्रः । आलानमेव आलानिकम् । विनयादित्वात्स्वार्थे ठक् । अथवालान बन्धनं प्रयोजनमस्येत्यालानिकम् । 'प्रयोजनम्' इति ठक् । स्थाणुं स्तम्भं इव । चूतवृक्ष इतिवत्सामान्यविशेषभावादपौनरुक्त्यं द्रष्टव्यम् । सोढुं नेशे न शक्नोमि ॥

तस्यापनोदाय फलप्रवृत्तौ उपस्थितायामपि निर्व्यपेक्षः ।
त्यक्ष्यामि वैदेहसुतां पुरस्तात्समुद्रनेमिं पितुराज्ञयेव ॥ ३९ ॥

तस्य अवर्णस्य अपनोदाय फलप्रवृत्तौ अपत्योत्पत्तौ उपस्थितायां सत्याम् अपि निर्व्यपेक्षः निःस्पृहः सन् । वैदेहसुतां पुरस्तात् पूर्वं पितुः आज्ञया [ समुद्रनेमिम् । ] समुद्रो नेमिरिव नेमिर्यस्याः सा भूमिः । ताम् इव त्यक्ष्यामि ॥

ननु सर्वथा साध्वी न त्याज्येत्यत्राह—

अवैमि चैनामनघेति किं तु लोकापवादो बलवान्मतो मे ।
छाया हि भूमेः शशिनो मलत्वेनारोपिता शुद्धिमतः प्रजाभिः ॥४०॥

एनां सीतां अनघा साध्वी इति च अवैमि । किं तु मे मम लोकापवादः बलवान्मतः । कुतः । हि यस्मात् प्रजाभिः भूमेश्छाया प्रतिबिम्बं शुद्धिमतः निर्मलस्य शशिनः मलत्वेन कलङ्कत्वेन आरोपिता । अतो लोकापवाद एव बलवानित्यर्थः ॥

---

१ क्षतौजाः, महौजाः. २ पुरः. ३ 'मत्तु' इ. पा०. ४ वाहात् ( पयोदान्वहतीति पयोदवाहो वायुः इति हेमाद्रिः । ). ५ तथा चोत्तररामचरिते—यत्सावित्रैर्दीपितं भूमिपालैर्लोकश्रेष्ठैः साधु शुद्धं चरित्रम् । मत्संबन्धात्कश्मला किंवदन्ती स्याच्चेदस्मिन्हन्त धिङ् मामधन्यम् ॥ ६ विपुली०. ७ स्तम्भं इ. पा०. ८ त्यजामि. ९ साम्राज्यराज्यम्. १० लोकप्रवादः; मलत्वे निरूपिता इ. च पा.

वदतां वाग्मिनां पुरोगः श्रेष्ठः विशुद्धवृत्तः। सर्पाधिराजः शेषस्तद्वदुरू भुजौ यस्य स [ सर्पाधिराजोरुभुजः ] विजितारिभद्रः विजितारिश्रेष्ठः स रामः स्ववृत्तम् उद्दिश्य भेद्रं भद्रनामकम् अपसर्पं चरं किंवदन्तीं जनवादं पप्रच्छ। 'अपसर्पश्चरः स्पशः इति'। 'किंवदन्ती जनश्रुतिः' इति चामरः॥

निर्बन्धपृष्टः स जगाद सर्वं स्तुवन्ति पौराश्चरितं त्वदीयम्।
अन्यत्र रक्षोभवनोषितायाः परिग्रहान्मानवदेव देव्याः॥ ३२॥

निर्बन्धेनाग्रहेण पृष्टः [ निर्बन्धपृष्टः ] सः अपसर्पः जगाद। किमिति। हे मानवदेव रक्षोभवन उषितायाः [ रक्षोभवनोषितायाः ] देव्याः सीतायाः परिग्रहात् स्वीकारात् अन्यत्र इतरांशे। तं वर्जयित्वेत्यर्थः। त्वदीयं सर्वं चरितं पौराः स्तुवन्ति॥

कलत्रनिन्दागुरुणा किलैवमभ्याहतं कीर्तिविपर्ययेण।
अयोघनेनाय इवाभितप्तं वैदेहिबन्धोर्हृदयं विदद्रे॥ ३३॥

एवं किल कलत्रनिन्दया गुरुणा दुर्वहेण [ कलत्रनिन्दागुरुणा ] कीर्तिविपर्ययेण अपकीर्त्या अभ्याहतं वैदेहिबन्धोः वैदेहिवल्लभस्य। 'ङ्यापोः संज्ञाछन्दसोर्बहुलम्' इति ह्रस्वः। कालिदास इतिवत्। हृदयम् अयोघनेन अभितप्तं संतप्तम् अयः इव विदद्रे विदीर्णम्। कर्तरि लिट्॥

किमात्मनिर्वादकथामुपेक्षे जायामदोषामुत संत्यजानि।
इत्येकपक्षाश्रयविक्लवत्वादासीत्स दोलाचलचित्तवृत्तिः॥ ३४॥

आत्मनो निर्वादोऽपवाद एव कथा तां [ आत्मनिर्वादकथां ] किम् उपेक्षे। उत अदोषां साध्वीं जायां संत्यजानि। उभयत्रापि प्रश्ने लोट्। इति एकपक्षाश्रयेऽन्यतरपक्षपरिग्रहे विक्लवत्वात् अपरिच्छेत्तृत्वात् [ एकपक्षाश्रयविक्लवत्वात् ] स रामः दोलेव चला चित्तवृत्तिर्यस्य स [ दोलाचलचित्तवृत्तिः ] आसीत्॥

निश्चित्य चानन्यनिवृत्ति वाच्यं त्यागेन पत्न्याः परिमार्ष्टुमैच्छत्।
अपि स्वदेहात्किमुतेन्द्रियार्थाद्यशोधनानां हि यशो गरीयः॥ ३५॥

किं च। वाच्यम् अपवादम्। नास्त्यन्येन त्यागातिरिक्तोपायेन निवृत्तिर्यस्य तत् अनन्यनिवृत्ति निश्चित्य पत्न्याः त्यागेन परिमार्ष्टुं परिहर्तुम् ऐच्छत्। तथा हि। यशोधनानां पुंसां स्वदेहादपि यशो गरीयः गुरुतरम्। इन्द्रियार्थात् स्रक्चन्दनवनितादेरिन्द्रियविषयाद्गरीय इति किमुत वक्तव्यम्। 'पञ्चमी विभक्ते' इत्युभयत्रापि पञ्चमी। सीता चेन्द्रियार्थ एव॥

---

१ 'विजयनामकम्' इ. रामा०. २ वृत्तं. ३ अपेक्षे, उपेक्षे इ०; उत-अथ, संत्यजामि इ. पा. ४ इत्येते-संत्यजामि इ. ०प्रश्ने लट् इ० च टीकायां०. ५ स्नेहं दयां च सौख्यं च यदि वा जानकीमपि। आराधनाय लोकानां मुञ्चतो नास्ति मे व्यथा॥ इति उत्तरा०.

स सांनिपात्यावरजान्हतौजा[1]स्तद्विक्रियादर्शनलुप्तहर्षान् ।
कौलीनमात्माश्रयमाचचक्षे तेभ्यः पुन[2]श्चेदमुवाच वाक्यम् ॥ ३६ ॥

हतौजाः निस्तेजस्कः स रामस्तस्य रामस्य विक्रियादर्शनेन लुप्तहर्षान् [ तद्विक्रियादर्शनलुप्तहर्षान् ] अवरजान् सांनिपात्य संगमय्य आत्माश्रयं स्वविषयकं कौलीनं निन्दां तेभ्यः आचचक्षे । पुनः इदं वाक्यम् उवाच च ॥

राजर्षिवंशस्य [3]रविप्रसूतेरुपस्थितः पश्यत कीदृशोऽयम् ।
मत्तः सदाचारशुचेः कलङ्कः पयोदवाता[4]दिव दर्पणस्य ॥ ३७ ॥

रवेः प्रसूतिर्जन्म यस्य तस्य [ रविप्रसूतेः ] राजर्षिवंशस्य सदाचारशुचेः सद्वृत्ताच्छुद्धात् मत्तः मत्सकाशात् । दर्पणस्य पयोदवातात् इव अम्भःकणादित्यर्थः । कीदृशः अयं कलङ्कः उपस्थितः प्राप्तः पश्यत ॥

[5]पौरेषु सोऽहं ब[6]हुलीभवन्तमपां तरंगेष्विव तैलबिन्दुम् ।
सोढुं न तत्पूर्वमवर्णमीशे आलानिकं स्थाणु[7]मिव द्विपेन्द्रः ॥ ३८ ॥

सः अहम् । अपां तरंगेषु तैलबिन्दुमिव । पौरेषु बहुलीभवन्तं प्रसरन्तम् । स एव पूर्वो यस्य स तम् तत्पूर्वम् । अवर्णं अपवादम् । 'अवर्णाक्षेपनिर्वादपरीवादापवादवत् ।' इत्यमरः । द्विपेन्द्रः । आलानमेव आलानिकम् । विनयादित्वात्स्वार्थे ठक् । अथवालान बन्धनं प्रयोजनमस्येत्यालानिकम् । 'प्रयोजनम्' इति ठक् । स्थाणुं स्तम्भं इव । चूतवृक्ष इतिवत्सामान्यविशेषभावादपौनरुक्त्यं द्रष्टव्यम् । सोढुं नेशे न शक्नोमि ॥

तस्यापनोदाय फलप्रवृत्तौ उपस्थितायामपि निर्व्यपेक्षः ।
त्यक्ष्या[8]मि [9]वैदेहसुतां पुरस्तात्समुद्रनेमिं पितुराज्ञयेव ॥ ३९ ॥

तस्य अवर्णस्य अपनोदाय फलप्रवृत्तौ अपत्योत्पत्तौ उपस्थितायां सत्याम् अपि निर्व्यपेक्षः निःस्पृहः सन् । वैदेहसुतां पुरस्तात् पूर्वं पितुः आज्ञया [ समुद्रनेमिम् । ] समुद्रो नेमिरिव नेमिर्यस्याः सा भूमिः । ताम् इव त्यक्ष्यामि ॥

ननु सर्वथा साध्वी न त्याज्येत्यत्राह—

अवैमि चैनामनघेति किं तु लोकापवादो[10] बलवान्मतो मे ।
छाया हि भूमेः शशिनो मलत्वेनारोपिता शुद्धिमतः प्रजाभिः ॥ ४० ॥

एनां सीतां अनघा साध्वी इति च अवैमि । किं तु मे मम लोकापवादः बलवान्मतः । कुतः । हि यस्मात् प्रजाभिः भूमेश्छाया प्रतिबिम्बं शुद्धिमतः निर्मलस्य शशिनः मलत्वेन कलङ्कत्वेन आरोपिता । अतो लोकापवाद एव बलवानित्यर्थः ॥

---

१ क्षतौजाः, महौजाः. २ पुरः. ३ 'मत्तु' इ. पा०. ४ वाहात् ( पयोदान्वहतीति पयोदवाहो वायुः इति हेमाद्रिः । ). ५ तथा चोत्तररामचरिते—यत्सावित्रैर्दीपितं भूमिपालैर्लोकश्रेष्ठैः साधु शुद्धं चरित्रम् । मत्संबन्धात्कश्मला किंवदन्ती स्याच्चेदस्मिन्हन्त धिङ् मामधन्यम् ॥ ६ विपुली०. ७ स्तम्भं इ. पा०. ८ त्यजामि. ९ साम्राज्यराज्यम्. १० लोकप्रवादः; मलत्वे निरूपिता इ. च पा.

**रक्षोवधान्तो न च मे प्रयासो व्यर्थः स वैरप्रतिमोचनाय ।**
**अमर्षणः शोणितकाङ्क्षया किं पदा स्पृशन्तं दशति द्विजिह्वः ॥ ४१ ॥**

किं च । मे **रक्षोवधान्तः प्रयासः व्यर्थः न** । किं तु **स वैरप्रतिमोचनाय** वैरशोधनाय । तथा हि । **अमर्षणः** असहनः **द्विजिह्वः** सर्पः । **पदा** पादेन **स्पृशन्तं** पुरुषं **शोणितकाङ्क्षया दशति किम्** । किं तु वैरनिर्यातनायेत्यर्थः ॥

**तदेष सर्गः करुणार्द्रचित्तैर्न मे भवद्भिः प्रतिषेधनीयः ।**
**यद्यर्थिता निर्हृतवाच्यशल्यान्प्राणान्मया धारयितुं चिरं वः ॥ ४२ ॥**

**तत्** तस्मात् **एष मे सर्गः** निश्चयः । 'सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु ।' इत्यमरः । **करुणार्द्रचित्तैः भवद्भिः न प्रतिषेधनीयः** । निर्हृतं वाच्यमेव शल्यं येषां तान् [ **निर्हृतवाच्यशल्यान्** ] **प्राणान्मया चिरं धारयितुं** धारणं कारयितुं **वः** युष्माकं **अर्थिता** अर्थित्वमिच्छा **यदि** । अस्तीति शेषः ॥

**इत्युक्तवन्तं जनकात्मजायां नितान्तरूक्षाभिनिवेशमीशम् ।**
**न कश्चन भ्रातृषु तेषु शक्तो निषेद्धुमासीदनुमोदितुं वा ॥ ४३ ॥**

**इत्युक्तवन्तं जनकात्मजायां** विषये **नितान्तरूक्षाभिनिवेशं** अतिक्रूराग्रहं **ईशं** स्वामिनं **तेषु भ्रातृषु** मध्ये **कश्चन** अपि **निषेद्धुं** निवारयितुम् **अनुमोदितुं** प्रवर्तयितुं **वा शक्तः न आसीत्** । पक्षद्वयस्यापि प्रबलत्वादित्यर्थः ॥

**स लक्ष्मणं लक्ष्मणपूर्वजन्मा विलोक्य लोकत्रयगीतकीर्तिः ।**
**सौम्येति चाभाष्य यथार्थभाषी स्थितं निदेशे पृथगादिदेश ॥ ४४ ॥**

**लोकत्रयगीतकीर्तिः यथार्थभाषी लक्ष्मणपूर्वजन्मा** लक्ष्मणाग्रजः **स** रामः **निदेशे स्थितं** आज्ञाकारिणं **लक्ष्मणं विलोक्य** हे **सौम्य** सुभग **इति आभाष्य च पृथक्** भरतशत्रुघ्नाभ्यां विनाकृत्य **आदिदेश** आज्ञापयामास ॥

**प्रजावती दोहदशंसिनी ते तपोवनेषु स्पृहयालुरेव ।**
**स त्वं रथी तद्व्यपदेशनेयां प्रापय्य वाल्मीकिपदं त्यजैनाम् ॥ ४५ ॥**

दोहदो गर्भिणीमनोरथः तच्छंसिनी [ **दोहदशंसिनी** ] **ते प्रजावती** भ्रातृजाया । 'प्रजावती भ्रातृजाया' इत्यमरः । **तपोवनेषु स्पृहयालुः** एव सस्पृहैव । 'स्पृहिगृहि-' इत्यादिनालुच्प्रत्ययः । **स त्वं रथी** सन् । [ **तद्व्यपदेशनेयां** ] तद्व्यपदेशेन दोहदमिषेण नेयां नेतव्यां **एनां** सीतां वाल्मीकेः पदं [ **वाल्मीकिपदं** ] स्थानं **प्रापय्य** गमयित्वा । 'विभाषापः' इत्ययादेशः । **त्यज** ॥

**स शुश्रुवान्मातरि भार्गवेण पितुर्नियोगात्प्रहृतं द्विषद्वत् ।**
**प्रत्यग्रहीदग्रजशासनं तदाज्ञा गुरूणां ह्यविचारणीया ॥ ४६ ॥**

१ यथार्थो. २ 'स्पर्श.' इ. पा. ३ वाच्यया. ४ निर्गत, निर्जित, इ. पा. ५ धारयतां. ६ अनुमोदितुं, अनुवर्तितुम् इ. पा. ७ भारः. ८ दैहिक इ., ०वनेषु-०वनेभ्यः इ. एव-एनां-इ. ०व पा. ९ निदेशात् इ., द्विषद्वत्- विशङ्कम् इ. च पा. १० त्व, न वि० इ० च पा.

**पितुः** जमदग्नेः **नियोगात्** शासनात् **भार्गवेण** जामदग्न्येन कृत्ता । 'न लोक' इत्यादिना षष्ठीप्रतिषेधः । **मातरि द्विषतीव द्विषद्वत्** । 'तत्र तस्येव' इति वतिप्रत्ययः । प्रहृतं प्रहारं **शुश्रुवान्** श्रुतवान् । 'भाषायां सदवसश्रुवः' इति क्वसुप्रत्ययः । **स** लक्ष्मणः **तद् अग्रजशासनं प्रत्यग्रहीत्** । **हि** यस्मात् **गुरूणाम् आज्ञा अविचारणीया**[1] ॥

**अथानुकूलश्रवणप्रतीतामत्रस्नुभिर्युक्तधुरं तुरंगैः ।**
**रथं सुमन्त्रप्रतिपन्नरश्मिमारोप्य वैदेहसुतां प्रतस्थे ॥ ४७ ॥**

**अथ** असौ लक्ष्मणः । अनुकूलश्रवणेन प्रतीताम् [ **अनुकूलश्रवणप्रतीतां** ] हृष्टा-कर्णनेन हृष्टां **वैदेहसुतां अत्रस्नुभिः** भर्मारुभिर्गर्भिणीवहनयोग्यैः । 'त्रसिगृधिधृषि-क्षिपेः क्नुः' इति क्नुप्रत्ययः । **तुरंगैः युक्तधुरं** सुमन्त्रेण प्रतिपन्नरश्मिं [ **सुमन्त्रप्रति-पन्नरश्मिं** ] गृहीतप्रग्रहं **रथम् आरोप्य प्रतस्थे** ॥

**सा नीयमाना रुचिरान्[3]प्रदेशान्प्रियंकरो मे प्रिय इत्यनन्दत् ।**
**नाबुद्ध कल्पद्रुमतां विहाय जातं तमात्मन्यसिपत्रवृक्षम् ॥ ४८ ॥**

**सा** सीता **रुचिरान् प्रदेशान् नीयमाना** प्राप्यमाणा सती **मे** मम **प्रियः** प्रियं करोतीति **प्रियंकरः** प्रियकारी **इति अनन्दत्** । 'क्षेमप्रियमद्रेऽण् च' इति चकारात्खच्प्र-त्ययः । **तं** प्रियं **आत्मनि** विषये **कल्पद्रुमतां विहाय असिपत्रवृक्षं जातं न अबुद्ध** नाज्ञासीत् । बुध्यतेर्लुङ् । असिपत्रः खड्गाकारदलः कोऽप्यपूर्वो वृक्षविशेषः । 'असिपत्रो भवे-त्कोषाकारे च नरकान्तरे' इति विश्वः । आसन्नघातुक इति भावः ॥

**जुगूह तस्याः पथि लक्ष्मणो यत्सव्येतरेण स्फुरता तदक्ष्णा ।**
**आख्यातमस्यै गुरु भावि दुःखमत्यन्तलुप्तप्रियदर्शनेन ॥ ४९ ॥**

**पथि लक्ष्मणः यद् दुःखं तस्याः** सीतायाः **जुगूह** प्रतिसंहृतवान् **तद् गुरु भावि** भविष्यद् दुःखमत्यन्तलुप्तं प्रियदर्शनं यस्य तेन [ **अत्यन्तलुप्तप्रियदर्शनेन** ] **स्फुरता सव्येतरेण** दक्षिणेन **अक्ष्णा अस्यै** सीतायै **आख्यातम्** । स्त्रीणां दक्षिणाक्षिस्फु-रणं दुर्निमित्तमाहुः ॥

**सा दुर्निमित्तोपगताद्विषादात्सद्यः परिम्लानमुखारविन्दा ।**
**राज्ञः शिवं सावरजस्य भूयादित्याशशंसे करणैरबाह्यैः ॥ ५० ॥**

**सा** सीता दुर्निमित्तेन दक्षिणाक्षिस्फुरणरूपेणोपगतात् [ **दुर्निमित्तोपगतात्** ]

---

१ 'अकृत्यमपि कार्यं वै गुर्वाज्ञा नैव लंघयेत्' इ. पद्मपुराणम्. २ श्रवणे प्र०;—प्रहृष्टाम् इ. पा०. ३ 'रुचिरप्र०' इ० पा०. ४ जुगोप इ., अस्याः-अस्यै इ. पा०. ५ चुम्बनेन. ६ अशुभानि बहून्येव पश्यामि रघुनन्दन । नयनं मे स्फुरत्यद्य गात्रोत्कम्पश्च जायते ॥ इत्यादि रामायणम्. ७ 'उपगमात्' इ. पा०. ८ शुभं. ९ विशङ्कैः.

-आसात् विषादात् दुःखात् सद्यः परिम्लानमुखारविन्दा सती सावरजस्य -सानुजस्य राज्ञः रामस्य शिवं भूयाद् इति अबाह्यैः करणैः अन्तःकरणैः आशशंसे। -शंसतेरपेक्षायामात्मनेपदमिष्यते । करणैरिति बहुवचनं क्रियावृत्त्यभिप्रायम्। पुनः पुनरा-शशंस इत्यर्थः ॥

गुरोर्नियोगाद्वनितां वनान्ते साध्वीं सुमित्रातनयो विहास्यन्।
अवार्यतेवोत्थितवीचिहस्तैर्जह्नोर्दुहित्रा स्थितया पुरस्तात् ॥ ५१ ॥

**गुरोः** ज्येष्ठस्य **नियोगात् साध्वीं वनिताम्** । अत्याज्यामित्यर्थः। **वनान्ते विहास्यन्** त्यक्ष्यन् **सुमित्रातनयः** लक्ष्मणः **पुरस्तात्** अग्रे **स्थितया** जह्नोः **दुहित्रा** जाह्नव्योत्थितवीचिहस्तैः [ **उत्थितवीचिहस्तैः** ] **अवार्यत इव** । अकार्यं मा कर्वित्यवार्यतेव इत्युत्प्रेक्षा ॥

रथात्स यन्त्रा निगृहीतवाहात्तां भ्रातृजायां पुलिनेऽवतार्य।
गङ्गां निषादाहृतनौविशेषस्ततार संधामिव सत्यसंधः ॥ ५२ ॥

**सत्यसंधः** सत्यप्रतिज्ञः **स** लक्ष्मणः **यन्त्रा** सारथिना **निगृहीतवाहात्** रुद्धाश्वात् **रथाद् तां भ्रातृजायां पुलिने अवतार्य** आरोप्य निषादेन किरातेनाहृतनौविशेषः आनीतदृढनौकः [ **निषादाहृतनौविशेषः** ] सन् । **गङ्गां** भागीरथीम् । **संधां** -प्रतिज्ञाम् **इव** । **ततार** । 'संधा प्रतिज्ञा मर्यादा' इत्यमरः ॥

अथ व्यवस्थापितवाक्कथंचित्सौमित्रिरन्तर्गतबाष्पकण्ठः।
औत्पातिकं मेघ इवाश्मवर्षं महीपतेः शासनमुज्जगार ॥ ५३ ॥

**अथ कथंचित्** व्यवस्थापिता प्रकृतिमापादिता वाग् येन सः [**व्यवस्थापितवाक्**] अन्तर्गतबाष्पः कण्ठो यस्य सः [ **अन्तर्गतबाष्पकण्ठः** ] । कण्ठस्तम्भिताश्रुरित्यर्थः । -**सौमित्रिः महीपतेः शासनम्** । **मेघः** उत्पाते भवं **औत्पातिकम् अश्मवर्षं** शिलावर्षं **इव** । **उज्जगार** उद्गीर्णवान् । दारुणत्वेनावाच्यत्वादुज्जगारेत्युक्तम् ॥

ततोऽभिषङ्गानिलविप्रविद्धा प्रभ्रश्यमानाभरणप्रसूना।
स्वमूर्तिलाभप्रकृतिं धरित्रीं लतेव सीता सहसा जगाम ॥ ५४ ॥

**ततः** अभिषङ्गः पराभवः । 'शापे त्वभिषङ्गः पराभवे' इत्यमरः । स एवानिलस्तेन विप्र-विद्धा **सीता** [**अभिषङ्गानिलविप्रविद्धा**] । प्रभ्रश्यमानानि पतन्त्याभरणान्येव प्रसूनानि -यस्याः सा [**प्रभ्रश्यमानाभरणप्रसूना**] अभिहता **लता इव** । **सहसा** [**स्वमूर्तिलाभ-प्रकृतिं**] स्वमूर्तिलाभस्य स्वशरीरलाभस्य स्वोत्पत्तेः प्रकृतिं कारणं **धरित्रीं जगाम**। -भूमौ पपातेत्यर्थः । स्त्रीणामापदि मातैव शरणमिति भावः ॥

---

१ 'भ्रातुः' इ. २ 'निदेशात्,' दपि तां; दयितां इ. ष पा०. ३ उच्छ्रित०, उद्धृत, इ. पा०. ४ यन्तृप्रनिप०, स्नायन्त्रप्रनिपन्न० इ. पा०. ५ विशेषां. ६ 'औत्पातिकः' इ. पा०. ७ विप्रयुद्धा, -मन्दवि०; नलविप्रयुद्धा. ८ पपात.

इक्ष्वाकुवंशप्रभवः कथं त्वां त्यजेदकस्मात्पतिरार्य[1]वृत्तः ।
इति क्षितिः संशयि[2]तेव तस्यै ददौ प्रवेशं जननी न तावत् ॥ ५५ ॥

इक्ष्वाकुवंशप्रभवः । महाकुलप्रसूतिरित्यर्थः । आर्यवृत्तः साधुचरितः पतिः भर्ता त्वाम् अकस्मात् अकारणात् कथं त्यजेत् । असंभावितमित्यर्थः । इति संशयिता इव संदिहानेव तावत् । त्यागहेतुज्ञानावधेः प्रागित्यर्थः । जननी क्षितिः तस्यै सीतायै प्रवेशम् । आत्मनीति शेषः । न ददौ ॥

सा[3] लुप्तसंज्ञा न विवेद दुःखं प्रत्यागतासुः समत[4]प्यतान्तः ।
तस्याः सुमित्रात्मजयत्नलब्धो मोहादभूत्कष्टतरः प्रबोधः ॥ ५६ ॥

लुप्तसंज्ञा नष्टचेतना मूर्छिता । सा दुःखं न विवेद । प्रत्यागतासुः लब्धसंज्ञा सती अन्तः समतप्यत । दुःखेनादह्यतेत्यर्थः । तपेः कर्मणि लङ् । कर्मकर्तरीति केचित् । तन्न । 'तपस्तपःकर्मकस्यैव' इति यङ्नियमात् । तस्याः सीतायाः सुमित्रात्मजयत्नलब्धः प्रबोधः मोहात्कष्टतरः अतिदुःखदः अभूत् । दुःखवेदनासंभवादिति भावः ॥

न चावदद्भर्तुरवर्णमार्या निराकरिष्णोर्वृजिनादृतेऽपि ।
आत्मानमेव स्थिरदुःखभाजं पुनः[5] पुनर्दुष्कृतिनं निनिन्द ॥ ५७ ॥

आर्या साध्वी सा सीता वृजिनाद् ऋते एनसो विना अपि । 'कलुषं वृजिनैनोऽघम्' इत्यमरः । 'अन्यारादितरर्ते–' इत्यादिना पञ्चमी । निराकरिष्णोः निरासकस्य । 'अलंकृञ्–' इत्यादिनेष्णुच्प्रत्ययः । भर्तुः अवर्णम् अपवादं न च अवदत् नैवावादीत् । किं तु स्थिरदुःखभाजम् अत एव दुष्कृतिनम् आत्मानं एव पुनः पुनर्निनिन्द ॥

आश्वास्य रामावरजः सतीं[6] तामाख्यातवाल्मीकिनिकेतमार्गः ।
निघ्नस्य मे भर्तृ[7]निदेशरौक्ष्यं देवि क्षमस्वेति बभूव नम्रः ॥ ५८ ॥

रामावरजः लक्ष्मणः सतीं साध्वीं तामाश्वास्य । [ आख्यातवाल्मीकिनिकेतमार्गः ] आख्यात उपदिष्टो वाल्मीकेर्निकेतस्याश्रमस्य मार्गो येन स तथोक्तः सन् । निघ्नस्य पराधीनस्य । 'अधीनो निघ्न आयत्तः' इत्यमरः । मे भर्तृनिदेशेन स्वाम्यनुज्ञया हेतुना यद्रौक्ष्यं पारुष्यं तत् [ भर्तृनिदेशरौक्ष्यं ] हे देवि क्षमस्व । इति नम्रः प्रणतः बभूव ॥

सीता तमुत्थाप्य जगाद वाक्यं प्रीतास्मि ते सौम्य[8] चिराय जीव ।
बिडौजसा विष्णुरिवाग्रजेन भ्रात्रा यदित्थं परवानसि त्वम् ॥ ५९ ॥

सीता तं लक्ष्मणम् उत्थाप्य वाक्यं जगाद । किमिति । हे सौम्य साधो ते प्रीतास्मि । चिराय चिरं जीव । यत् यस्मात् । बिडौजसा इन्द्रेण विष्णुः उपेन्द्रः इव । अग्रजेन ज्येष्ठेन भ्रात्रा त्वम् इत्थं परवान् परतन्त्रः असि ॥

---

१ °प्रार्थितार्य°, °वृत्तिः, इति–इत्थम् इ. पा°. २ संशयिनी. ३ सुप्तस°. ४ समदह्यता°. ५ पदे पदे, दुःकृतिनम् इ. च पा° ६ स सीतां. ७ भ्रातृ, °रौक्षं इ. पा.; देवि–मातः. ८ वत्स, पुत्र इ. पा°

श्वश्रूजनं सर्वमनुक्रमेण विज्ञापयं प्रापितमत्प्रणामः ।
प्रजानिषेकं मयि वर्तमानं सूनोरनुध्यायत चेतसेति ॥ ६० ॥

सर्वं श्वश्रूजनम् अनुक्रमेण प्रापितमत्प्रणामः सन् । मत्प्रणाममुक्त्वेत्यर्थः । विज्ञापय । किमिति । निषिच्यत इति निषेकः । मयि वर्तमानं सूनोः त्वत्पुत्रस्य प्रजानिषेकं गर्भं चेतसा अनुध्यायत शिवमस्त्विति चिन्तयत इति ॥

वाच्यस्त्वया मद्वचनात्स राजा वह्नौ विशुद्धामपि यत्समक्षम् ।
मां लोकवादश्रवणादहासीः श्रुतस्य किं तत्सदृशं कुलस्य ॥ ६१ ॥

स राजा त्वया मद्वचनात् मद्वचनमिति कृत्वा । ल्यब्लोपे पञ्चमी । वाच्यः वक्तव्यः । किमित्यत आह—'वह्नौ' इत्यादिभिः सप्तभिः श्लोकैः । अक्ष्णोः समीपे समक्षम् । विभक्त्यर्थेऽव्ययीभावः सामीप्यार्थे वा । 'अव्ययीभावे शरत्प्रभृतिभ्यः' इति समासान्तष्टच्प्रत्ययः । समक्षम् अग्रे वह्नौ विशुद्धाम् अपि मां [लोकवादश्रवणात्] लोकवादस्य मिथ्यापवादस्य श्रवणाद्धेतोः अहासीः अत्याक्षीरिति यत् तत् श्रुतस्य प्रख्यातस्य कुलस्य सदृशं किम् । किं त्वसदृशमित्यर्थः । यद्वा श्रुतस्य श्रवणस्य कुलस्य चेति योजना । कामचारोऽसीति भावः ॥

कल्याणबुद्धेरथ वा तवायं न कामचारो मयि शङ्कनीयः ।
ममैव जन्मान्तरपातकानां विपाकविस्फूर्जथुरप्रसह्यः ॥ ६२ ॥

अथ वा कल्याणबुद्धेः सुधियः तव कर्तुः मयि विषये अयं त्यागः कामचारः इच्छया करणं न शङ्कनीयः । कामचारशङ्कापि न क्रियत इत्यर्थः । किं तु मम एव जन्मान्तरपातकानाम् अप्रसह्यः] विपाकविस्फूर्जथुः] विपच्यत इति विपाकः फलं स एव विस्फूर्जथुः अशनिनिर्घोषः । 'स्फूर्जथुर्वज्रनिर्घोषे' इत्यमरः ॥

उपस्थितां पूर्वमपास्य लक्ष्मीं वनं मया सार्धमसि प्रपन्नः ।
तदास्पदं प्राप्य तयातिरोषात्सोढास्मि न त्वद्भवने वसन्ती ॥ ६३ ॥

पूर्वम् उपस्थितां प्राप्तां लक्ष्मीम् अपास्य मया सार्धं वनं प्रपन्नः असि प्राप्तोऽसि । तत् तस्मात् तया लक्ष्म्या अतिरोषात् त्वद्भवने आस्पदं प्रतिष्ठाम् । 'आस्पदं प्रतिष्ठायाम्' इति निपातः । प्राप्य वसन्ती अहं सोढा न अस्मि ॥

निशाचरोपप्लुतभर्तृकाणां तपस्विनीनां भवतः प्रसादात् ।
भूत्वा शरण्या शरणार्थमन्यं कथं प्रपत्स्ये त्वयि दीप्यमाने ॥ ६४ ॥

निशाचरैरुपप्लुताः पीडिता भर्तारो यासां ताः निशाचरोपप्लुतभर्तृकाः । 'नद्यृतश्च' इति कप्रत्ययः । तासां [निशाचरोपप्लुतभर्तृकाणां] तपस्विनीनां भवतः प्रसा-

१ विज्ञापयेः इ० पा०. २ तं. ३ प्रयात. इ० पा०. ४ त्वय्यास्पदं, त्वदास्पदम् इ० पा०. ५ यातुरो. ६ भुवनं. ७ अन्या. ८ वर्तमाने इ. पा०.

न्नात् अनुग्रहात् शरण्या शरणसमर्था भूत्वा । अथ त्वयि दीप्यमाने प्रकाशमाने सत्येव शरणार्थम् अन्यं तपस्विनं कथं प्रपत्स्ये प्राप्स्यामि ॥

किं वा तवात्यन्तवियोगमोघे कुर्यामुपेक्षां हतजीवितेऽस्मिन् ।[४]
स्याद्रक्षणीयं यदि मे न तेजस्त्वदीयमन्तर्गतमन्तरायः ॥ ६५ ॥

किं वा अथ वा तव संबन्धिनात्यन्तेन पुनःप्राप्तिरहितेन वियोगेन मोघे निष्फले [ अत्यन्तवियोगमोघे ] अस्मिन्हतजीविते तुच्छजीविते उपेक्षां कुर्यां कुर्यामेव । रक्षणीयं रक्षणार्हम् अन्तर्गतं कुक्षिस्थं त्वदीयं तेजः मे अन्तरायः विघ्नः न स्याद्यदि ॥

साहं तपः सूर्यनिविष्टदृष्टिरूर्ध्वं प्रसूतेश्चरितुं यतिष्ये ।
भूयो यथा मे जननान्तरेऽपि त्वमेव भर्ता न च विप्रयोगः ॥ ६६ ॥

सा अहं प्रसूतेः ऊर्ध्वं सूर्यनिविष्टदृष्टिः सती तथाविधं तपश्चरितुं यतिष्ये । यथा भूयः तेन तपसा मे मम जननान्तरे अपि त्वम् एव भर्ता स्याः विप्रयोगः च न स्यात् ॥

नृपस्य वर्णाश्रमपालनं यत्स एव धर्मो मनुना प्रणीतः ।
निर्वासिताप्येवमतस्त्वयाहं तपस्विसामान्यमवेक्षणीया ॥ ६७ ॥

वर्णानां ब्राह्मणादीनामाश्रमाणां ब्रह्मचर्यादीनां च पालनं [ वर्णाश्रमपालनं ] यत्स एव नृपस्य धर्मः मनुना प्रणीतः उक्तः । अतः कारणात् एवं त्वया निर्वासिता निष्कासिता अपि अहं तपस्विभिः सामान्यं साधारणं यथा भवति तथा [ तपस्विसामान्यम् ] अवेक्षणीया । कलत्रदृष्ट्यभावेऽपि वर्णाश्रमदृष्टिः कर्तव्येत्यर्थः ॥

तथेति तस्याः प्रतिगृह्य वाचं रामानुजे दृष्टिपथं व्यतीते ।
सा मुक्तकण्ठं व्यसनातिभाराच्चक्रन्द विग्ना कुररीव भूयः ॥ ६८ ॥

तथेति तस्याः सीतायाः वाचं प्रतिगृह्य अङ्गीकृत्य रामानुजे लक्ष्मणे दृष्टिपथं व्यतीते अतिक्रान्ते सति सा सीता व्यसनातिभारात् दुःखातिरेकात् मुक्तकण्ठं यथा स्यात्तथा । वाग्मुक्त्येत्यर्थः । विग्ना भीता कुररी इव उत्क्रोशीव । 'उत्क्रोशकुररौ समौ' इत्यमरः । भूयः भूयिष्ठं चक्रन्द चुक्रोश ॥

नृत्यं मयूराः कुसुमानि वृक्षा दर्भानुपात्तान्विजहुर्हरिण्यः ।
तस्याः प्रपन्ने समदुःखभावमत्यन्तमासीद्रुदितं वनेऽपि ॥ ६९ ॥

मयूराः नृत्यं विजहुः त्यक्तवन्तः । वृक्षाः कुसुमानि । हरिण्यः उपात्तान्दर्भान् । इत्थं तस्याः सीतायाः समदुःखभावं प्रपन्ने तुल्यदुःखत्वं प्राप्ते वने अपि अत्यन्तं रुदितम् आसीत् । यथा रामगेहेऽपीत्यपिशब्दार्थः ॥

---

१ अपेक्षाम्. २ अन्तर्हितं. ३ निबद्ध इ. पा०. ४ रक्षणं. ५ ०पथात्. विग्ना—व्यग्रा, भीता. ६ नृत्तं. ७ वृक्षाः. ८ अस्मात्परमिदं पद्यं क्वचित्—केयं वने लक्ष्मण लक्ष्मणेति दीनाक्षरं रोदिति योषिदुच्चैः । आं ज्ञातमेषा जनकात्मजेति कविर्विचिन्त्यान्तिकमाजगाम ॥

**तामभ्यगच्छद्रुदितानुसारी कविः कुशेध्माहरणाय यातः ।**
**निषादविद्धाण्डजदर्शनोत्थः श्लोकत्वमापद्यत यस्य शोकः ॥ ७० ॥**

**कुशेध्माहरणाय यातः कविः** वाल्मीकिः **रुदितानुसारी** सन् **तां** सीताम् **अभ्यगच्छत्** । अभिगमनं च दयालुत्वमित्याह—निषादेति । निषादेन व्याधेन विद्धस्याण्डजस्य क्रौञ्चस्य दर्शनेनोत्थ उत्पन्नः [ **निषादविद्धाण्डजदर्शनोत्थः** ] **यस्य शोकः श्लोकत्वम् आपद्यत** । श्लोकरूपेणाशोचादित्यर्थः । स च श्लोकः पठ्यते—'मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः । यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥' इति । तिरश्चामपि दुःखं न सेहे । किमुतान्येषामिति भावः ॥

**तमश्रु नेत्रावरणं प्रमृज्य सीता विलापाद्विरता ववन्दे ।**
**तस्यै मुनिर्दोहदलिङ्गदर्शी दाश्वान्सुपुत्राशिषमित्युवाच ॥ ७१ ॥**

**सीता विलापाद् विरता** सती **नेत्रावरणं** दृष्टिप्रतिबन्धकम् **अश्रु प्रमृज्य तं** मुनिं **ववन्दे** । **दोहदलिङ्गदर्शी** गर्भचिह्नदर्शी **मुनिस्तस्यै** सीतायै **सुपुत्राशिषं** तत्प्राप्तिहेतुभूतां **दाश्वान्** दत्तवान् **इति** वक्ष्यमाणप्रकारेण **उवाच** । 'दाश्वान्साह्वान्मीढ्वांश्च' इति क्वस्वन्तो निपातः ॥

**जाने विसृष्टां प्रणिधानतस्त्वां मिथ्यापवादक्षुभितेन भर्त्रा ।**
**तन्मा व्यथिष्ठा विषयान्तरस्थं प्राप्तासि वैदेहि पितुर्निकेतम् ॥ ७२ ॥**

**त्वां** मिथ्यापवादेन क्षुभितेन [ **मिथ्यापवादक्षुभितेन** ] **भर्त्रा विसृष्टां** त्यक्तां **प्रणिधानतः** समाधिदृष्ट्या **जाने** । हे **वैदेहि विषयान्तरस्थं** देशान्तरस्थं **पितुः** जनकस्यैव **निकेतं** गृहं **प्राप्ता असि** । **तत्** तस्मात् **मा व्यथिष्ठाः** मा शोचीः । व्यथेर्लुङ् । 'न माङ्योगे' इत्यडागमप्रतिषेधः । भर्त्रोपेक्षितानां पितृगृहवास एवोचित इति भावः ॥

**उत्खातलोकत्रयकण्टकेऽपि सत्यप्रतिज्ञेऽप्यविकत्थनेऽपि ।**
**त्वां प्रत्यकस्मात्कलुषप्रवृत्तावस्त्येव मन्युर्भरताग्रजे मे ॥ ७३ ॥**

**उत्खातलोकत्रयकण्टकेऽपि** । रावणादिकण्टकोद्धरणेन सर्वलोकोपकारिण्यपीत्यर्थः । **सत्यप्रतिज्ञे** सत्यसंधे **अपि** । **अविकत्थने** अनात्मश्लाघिनि **अपि** । इत्थं स्नेहपात्रेऽपि **त्वां प्रति अकस्मात्** अकारणात् **कलुषप्रवृत्तौ** गर्हितव्यापारे **भरताग्रजे मे मन्युः** कोपः **अस्त्येव** । सर्वगुणाच्छादकोऽयं दोष इत्यर्थः । सीतानुनयार्थोऽयं रामोपालम्भः ॥

**तवोरुकीर्तिः श्वशुरः सखा मे सतां भवोच्छेदकरः पिता ते ।**
**धुरि स्थिता त्वं पतिदेवतानां किं तन्न येनासि ममानुकम्प्या ॥ ७४ ॥**

---

१ म्यगान्द्रुदितानुसारी. २ मुनिः. ३ दौर्हद०; लक्ष्म. ४ दत्त्वा इ. पा०. ५ कत्थमाने. ६ इन्दुकीर्तिः इ. पा० ७ भयच्छे०, भव०; ०च्छेदगुरुः (भवस्य संसारस्य छेदे गुरुर्मोक्षविद्योपदेष्टा इ. पा०)

उरुकीर्तिः तव श्वशुरः दशरथः मे सखा । ते पिता जनकः सतां विदुषां भवोच्छेदकरः ज्ञानोपदेशादिना संसारदुःखध्वंसकारी । त्वं पतिदेवतानां पतिव्रतानां धुरि अग्रे स्थिता । येन निमित्तेन ममानुकम्प्या अनुग्राह्या न असि तत्किम् न किंचिदित्यर्थः ॥

तपस्विसंसर्गविनीतसत्त्वे तपोवने वीतभया वसास्मिन् ।
इतो भविष्यत्यनघप्रसूतेरपत्यसंस्कारमयो विधिस्ते ॥ ७५ ॥

तपस्विसंसर्गेण विनीतसत्त्वे [ तपस्विसंसर्गविनीतसत्त्वे ] शान्तजन्तुके अस्मिन् तपोवने वीतभया निर्भीका वस । इतः अस्मिन्वने अनघप्रसूतेः सुखप्रसूतेः ते अपत्यसंस्कारमयः जातकर्मादिरूपः विधिः अनुष्ठानं भविष्यति ॥

अशून्यतीरां मुनिसंनिवेशैस्तमोपहन्त्रीं तमसां वगाह्य[1] ।
तत्सैकतोत्सङ्गबलिक्रियाभिः संपत्स्यते ते मनसः प्रसादः[2] ॥ ७६ ॥

संनिविशन्ते येष्विति संनिवेशा उटजाः । अधिकरणार्थे घञ्प्रत्ययः । मुनीनां संनिवेशैरुटजैः [ मुनिसंनिवेशैः ] अशून्यतीरां पूर्णतीराम् [ तमोपहन्त्रीं ] तमसः शोकस्य पापस्य वापहन्त्रीम् । 'तमस्तु ध्वान्ते पापे नरकशोकयोः' इत्यमरः । तमसां नदीं वगाह्य तत्र स्नात्वा । [ तत्सैकतोत्सङ्गबलिक्रियाभिः ] तस्याः सैकतोत्सङ्गेषु बलिक्रियाभिर्देवतापूजाविधिभिः ते मनसः प्रसादः संपत्स्यते भविष्यति ॥

पुष्पं फलं चार्तवमाहरन्त्यो बीजं च बालेयमकृष्टरोहि[3] ।
विनोदयिष्यन्ति नवाभिषङ्गामुदारवाचो मुनिकन्यकास्त्वाम् ॥ ७७ ॥

ऋतुरस्य प्राप्तः आर्तवम् । स्वकालप्राप्तमित्यर्थः । पुष्पं फलं च । अकृष्टरोहि अकृष्टक्षेत्रोत्थम् । अकृष्टपच्यमित्यर्थः । बलये हितं बालेयं पूजायोग्यम् । 'छदिरुपधिबलेर्ढञ्' इति ढञ्प्रत्ययः । बीजं नीवारादि धान्यं च आहरन्त्यः उदारवाचः प्रगल्भगिरः मुनिकन्यकाः नवाभिषङ्गां नूतनदुःखां त्वां विनोदयिष्यन्ति ॥

पयोघटै[4]राश्रमबालवृक्षान्संवर्धयन्ती स्वबलानुरूपैः[5] ।
असंशयं प्राक्तनयोपपत्तेः स्तनंधयप्रीतिम[6]वाप्स्यसि त्वम् ॥ ७८ ॥

स्वबलानुरूपैः स्वशक्त्यनुसारिभिः पयसामम्भसां घटैः [ पयोघटैः ] । स्तन्यैरिति च ध्वन्यते । आश्रमबालवृक्षान्संवर्धयन्ती त्वं तनयोपपत्तेः प्राक् पूर्वम् असंशयं यथा तथा । स्तनं धयति पिबतीति स्तनंधयः शिशुः । 'नासिकास्तनयोर्ध्माधेटोः' इति खश्प्रत्ययः । 'अरुर्द्विषत्-' इत्यादिना मुमागमः । तस्मिन्या प्रीतिस्तां [ स्तनंधयप्रीतिम् ] अवाप्स्यसि । ततः परं सुलभ एव विनोद इति भावः ॥

१ विगाह्य. २ प्रमोदः, अभिलाषः इ. पा०. ३ ०पच्यम्, काले यदकृष्टरोहि इ. पा०. ४ पयोधरैः. ५ ०रूपम्, सुतनिर्विशेषम् इ. पा०. ६ मिवा०.

अनुग्रहमत्यभिनन्दिनीं तं वाल्मीकिरादाय दयार्द्रचेताः ।
सायं मृगाध्यासितवेदिपार्श्वं स्वमाश्रमं शान्तमृगं निनाय ॥ ७९ ॥

दयार्द्रचेताः वाल्मीकिः । [ अनुग्रहमत्यभिनन्दिनीं ] अनुग्रहं प्रत्यभिनन्दतीति तथोक्तां तां सीताम् आदाय सायं [ मृगाध्यासितवेदिपार्श्वम् ] मृगैरध्यासितवेदिपार्श्वमधिष्ठितवेदिप्रान्तं शान्तमृगं स्वमाश्रमं निनाय ॥

तामर्पयामास च शोकदीनां तदागमप्रीतिषु तापसीषु ।
निर्विष्टसारां पितृभिर्हिमांशोरन्त्यां कलां दर्श इवौषधीषु ॥ ८० ॥

शोकदीनां तां सीतां तस्याः सीताया आगमेन प्रीतिर्यासां तासु [ तदागमप्रीतिषु ] तापसीषु । पितृभिः अग्निष्वात्तादिभिः निर्विष्टसारां भुक्तसारां हिमांशोः अन्त्याम् अवशिष्टां कलां दर्शः अमावास्याकालः ओषधीषु इव । अर्पयामास च । अत्र पराशरः—' पिबन्ति विमलं सोमं विशिष्टा तस्य या कला । सुधामृतमयीं पुण्यां तामिन्दोः पितरो मुने ॥ ' इति । व्यासश्च—' अमायां तु सदा सोम ओषधीः प्रतिपद्यते ' इति ॥

ता इङ्गुदीस्नेहकृतप्रदीपमास्तीर्णमेध्याजिनतल्पमन्तः ।
तस्यै सपर्यानुपदं दिनान्ते निवासहेतोरुटजं वितेरुः ॥ ८१ ॥

ताः तापस्यः तस्यै सीतायै सपर्यानुपदं पूजानन्तरं दिनान्ते सायंकाले निवास एव हेतुस्तस्य निवासहेतोः । निवासार्थमित्यर्थः । ' षष्ठी हेतुप्रयोगे ' इति षष्ठी । ' इङ्गुदी तापसतरुः ' इत्यमरः । [ इङ्गुदीस्नेहकृतप्रदीपम् ] इङ्गुदीस्नेहेन कृतप्रदीपं अन्त आस्तीर्णं मेध्यं शुद्धमजिनमेव तल्पं शय्या यस्मिंस्तं [ आस्तीर्णमेध्याजिनतल्पम् ] उटजं पर्णशालां वितेरुः ददुः ॥

तत्राभिषेकप्रयता वसन्ती प्रयुक्तपूजा विधिनातिथिभ्यः ।
वन्येन सा वल्कलिनी शरीरं पत्युः प्रजासंततये बभार ॥ ८२ ॥

तत्र आश्रमेऽभिषेकेण स्नानेन प्रयता नियता [ अभिषेकप्रयता ] वसन्ती विधिना शास्त्रेण अतिथिभ्यः प्रयुक्तपूजा कृतसत्कारा वल्कलिनी सा सीता पत्युः प्रजासंततये संतानाविच्छेदाय । वन्येन कन्दमूलादिना शरीरं बभार पुपोष ॥

अपि प्रभुः सानुशयोऽधुना स्यादिति्युत्सुकः शक्रजितोऽपि हन्ता ।
शशंस सीतापरिदेवनान्तमनुष्ठितं शासनमग्रजाय ॥ ८३ ॥

प्रभुः राजा अधुना सानुशयः स्याद् अपि सानुतापः स्यात्किम् । इति उत्सुकः । शक्रजितः इन्द्रजितः हन्ता लक्ष्मणः अपि सीतापरिदेवनान्तं सीताविलापान्तम् अनुष्ठितं शासनम् अग्रजाय शशंस ॥

---

१ अनुग्रहं. २ नन्दितां. ३ •मुखं, शान्तिमुखं. ४ समर्प्य• ५ स. ६ तैल• ७ निषिधा•. ८ वर्पा. ९ निहन्ता. १० देविता•.

बभूव रामः सहसा सबाष्पस्तुषारवर्षीव सहस्यचन्द्रः ।
कौलीनभीतेन गृहान्निरस्ता न तेन वैदेहसुता मनस्तः ॥ ८४ ॥

सहसा सपदि सबाष्पः रामः । तुषारवर्षी सहस्यचन्द्रः इव बभूव । अल्पश्रुतया तुषारवर्षिणा पौषचन्द्रेण तुल्योऽभूत् । 'पौषे तैषसहस्यौ द्वौ' इत्यमरः । युक्तं चैतदित्याह—कौलीनाल्लोकापवादाद्भीतेन [ कौलीनभीतेन ] तेन रामेण वैदेहसुता सीता गृहात् निरस्ता । न मनस्तः मनसश्चित्तान्न निरस्ता । पञ्चम्यास्तसिल् ॥

निगृह्य शोकं स्वयमेव धीमान्वर्णाश्रमावेक्षणजागरूकः ।
स भ्रातृसाधारणभोगमृद्धं राज्यं रजोरिक्तमनाः शशास ॥ ८५ ॥

धीमान् वर्णानामाश्रमाणां चावेक्षणेऽनुसंधाने जागरूकोऽप्रमत्तः [ वर्णाश्रमावेक्षणजागरूकः ] । 'जागरूकः' इत्यूकप्रत्ययः । रजोरिक्तमनाः रजोगुणशून्यचित्तः स रामः स्वयमेव शोकं निगृह्य निरुध्य भ्रातृभिः साधारणभोगं [ भ्रातृसाधारणभोगम् ] । शरीरस्थितिमात्रोपयुक्तमित्यर्थः । ऋद्धं राज्यं शशास ॥

तामेकभार्यां परिवादभीरोः साध्वीमपि त्यक्तवतो नृपस्य ।
वक्षस्यसंघट्टसुखं वसन्ती रेजे सपत्नीरहितेव लक्ष्मीः ॥ ८६ ॥

परिवादभीरोः निन्दाभीरोरव एव एकभार्याम् अपि साध्वीमपि तां सीतां त्यक्तवतः नृपस्य वक्षसि असंघट्टसुखम् असंभाव्यसुखं वसन्ती लक्ष्मीः सपत्नीरहिता इव रेजे दिदीपे । तस्य द्वयन्तरपरिग्रहो नाभूदिति भावः ॥

सीतां हित्वा दशमुखरिपुर्नोपयेमे यदन्यां
तस्या एव प्रतिकृतिसखो यत्क्रतूनाजहार ।
वृत्तान्तेन श्रवणविषयप्रापिणा तेन भर्तुः
सा दुर्वारं कथमपि परित्यागदुःखं विषेहे ॥ ८७ ॥

दशमुखरिपुः रामः सीतां हित्वा त्यक्त्वा अन्यां स्त्रियं न उपयेमे न परिणीतवानिति यत् । 'उपाद्यमः स्वकरणे' इत्यात्मनेपदम् । किं च । तस्याः सीताया एव प्रतिकृतेः प्रतिमाया हिरण्मय्याः सखा प्रतिकृतिसखः सन् क्रतून् आजहार आहृतवानिति यत् । तेन श्रवणविषयप्रापिणा श्रोत्रदेशगामिना भर्तुः वृत्तान्तेन वार्तया हेतुना सा सीता दुर्वारं दुर्निरोधं [ परित्यागदुःखं ] परित्यागेन यद्दुःखं तत् कथमपि विषेहे विसोढवती ॥

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीवनीसमाख्यया
व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये
सीतापरित्यागः नाम चतुर्दशः सर्गः ।

---

१ सद्य इ० पा० २ तन्द्र. ३ असंघट्ट० इ. रेजे-रेमे इ. च पा० ४ आजुहाव. ५ स्यापिना०, संप्रापि० इ. पा० ६ दुर्वारवनम् इ. पा.

## पञ्चदशः सर्गः ।

अरण्यकं गृहस्थानं श्वशुरो यद्रजःकणाः ।[1]
स्वयमौद्वाहिकं गेहं तस्मै रामाय ते नमः ॥

कृतसीतापरित्यागः स रत्नाकरमेखलाम् ।
बुभुजे पृथिवीपालः[2] पृथिवीमेव केवलाम्[3] ॥ १ ॥

कृतसीतापरित्यागः स पृथिवीपालः रामः रत्नाकर एव मेखला यस्यास्ताम् [ रत्नाकरमेखलाम् ] । सागरान्तामित्यर्थः । केवलाम् । एकामित्यर्थः । पृथिवीमेव बुभुजे भुक्तवान् । न तु पार्थिवीमित्यर्थः । सापि रत्नखचितमेखला । पृथिव्याः कान्तासमाधिर्व्यज्यते । रामस्य स्त्र्यन्तरपरिग्रहो नास्तीति श्लोकाभिप्रायः ॥

लवणेन विलुप्तेज्यास्तामिस्रेण तमभ्ययुः[4] ।
मुनयो यमुनाभाजः शरण्यं शरणार्थिनः ॥ २ ॥

लवणेन लवणाख्येन तामिस्रेण तमिस्राचारिणा । रक्षसेत्यर्थः । विलुप्तेज्याः लुप्तयागक्रियाः अत एव शरणार्थिनः रक्षणार्थिनः यमुनाभाजः यमुनातीरवासिनः मुनयः शरण्यं शरणार्हं रक्षणसमर्थं तं रामं रक्षितारम् अभ्ययुः प्राप्ताः । यातेर्लङ् ॥

अवेक्ष्य रामं ते तस्मिन्न प्रजहुः स्वतेजसा ।
त्राणाभावे हि शापास्त्राः कुर्वन्ति तपसो व्ययम् ॥ ३ ॥

ते मुनयः रामम् अवेक्ष्य । रक्षितारमिति शेषः । तस्मिन् लवणे स्वतेजसा शापरूपेण न प्रजहुः । तथा हि । त्रायते इति त्राणं रक्षकम् । कर्तरि ल्युट् । तदभावे [ त्राणाभावे ] शाप एवास्त्रं येषां ते शापास्त्राः सन्तः तपसः व्ययं कुर्वन्ति । शापदानात्तपःक्षयः प्रसिद्धः ॥

प्रतिशुश्राव काकुत्स्थस्तेभ्यो विघ्नप्रतिक्रियाम् ।
धर्मसंरक्षणार्थैव[5] प्रवृत्तिर्[6]भुवि शार्ङ्गिणः ॥ ४ ॥

काकुत्स्थः रामः तेभ्यः मुनिभ्यः विघ्नप्रतिक्रियां लवणवधरूपां प्रतिशुश्राव प्रतिजज्ञे । तथा हि । भुवि शार्ङ्गिणः विष्णोः प्रवृत्तिः रामरूपेणावतरणं [ धर्मसंरक्षणार्था ] धर्मसंरक्षणमेवार्थः प्रयोजनं यस्याः सा तथा एव ॥

ते रामाय वधोपायमाचख्युर्विबुधद्विषः ।
दुर्जयो लवणः शूली विशूलः प्रार्थ्यतामिति ॥ ५ ॥

ते मुनयः रामाय विबुधद्विषः सुरारेर्लवणस्य वधोपायम् आचख्युः । कुता-

---

१ जगच्छरण्यस्यापि मे भर्तुः किं रामनामजपेनेन प्रयोजनमिति कुपितायाः पार्वत्यास्तं प्रत्युक्तिरियम्—यस्यारण्यादन्यद् गृहमपि न वर्तते यस्य श्वशुरो पार्थिवकणा एव केवलं सीताया भूमिसमवत्वात् यस्य चोद्वाहसमये स्वं गृहमपि नासीत् तस्मै अकिंचनाय रामाय तव कथं नमस्कृतिरिति पार्वत्या आशयः । २ भूपः. ३ केवलम् इ. पा. ४ अन्वगुः—न्ययुः. ५ णार्थाय, णार्थैव. ६ प्रत्या- मथ् इ. पा.

-तीति लवणः । नन्द्यादित्वाल्ल्युः । तत्रैव निपातनाण्णत्वम् । लवणः शूली शूलवान् दुर्जयः । किं तु विशूलः शूलरहितः प्रार्थ्यताम् अभिगम्यताम् इति । 'याच्ञायामभियाने च प्रार्थना कथ्यते बुधैः' इति केशवः ॥

**आदिदेशाथ शत्रुघ्नं तेषां क्षेमाय राघवः ।**
**करिष्यन्निव नामास्य यथार्थमरिनिग्रहात् ॥ ६ ॥**

**अथ तेषां** मुनीनां **क्षेमाय** क्षेमकरणाय **राघवः** रामः **शत्रुघ्नम् आदिदेश** । अत्रोत्प्रेक्षते । **अस्य** शत्रुघ्नस्य **नाम अरिनिग्रहात्** शत्रुहननाद्धेतोः । यथाभूतोऽर्थो यस्य तत् **यथार्थं करिष्यन् इव** । शत्रून्हन्तीति शत्रुघ्नः । 'अमनुष्यकर्तृके च' इति चकाराद् कृतघ्नशत्रुघ्नादयः सिद्धा इति दुर्गसिंहः । पाणिनीयेऽपि बहुलग्रहणाद्यथेष्टसिद्धिः । 'कृत्यल्युटो बहुलम्' इति ॥

रामस्य स्वयमप्रयाणे हेतुमाह—

**यः कश्चन रघूणां हि परमेकः परंतपः ।**
**अपवाद इवोत्सर्गं व्यावर्तयितुमीश्वरः ॥ ७ ॥**

**हि** यस्मात् । पराञ्छत्रूंस्तापयतीति **परंतपः** । 'द्विषत्परयोस्तापेः' इति खच्प्रत्ययः । 'खचि ह्रस्वः' इति ह्रस्वः । **रघूणां** मध्ये **यः कश्चन एकः** । **अपवादः** विशेषशास्त्रम् **उत्सर्गं** सामान्यशास्त्रम् **इव** । **परं** शत्रुं **व्यावर्तयितुं** बाधितुं **ईश्वरः** समर्थः । अतः शत्रुघ्नमेवादिदेशेति पूर्वेणान्वयः ॥

**अग्रजेन प्रयुक्ताशीस्ततो दाशरथी रथी ।**
**ययौ वनस्थलीः पश्यन्पुष्पिताः सुरभीरभीः ॥ ८ ॥**

**ततः अग्रजेन** रामेण **प्रयुक्ताशीः** कृताशीर्वादः **रथी** रथिकः **अभीः** निर्भीकः **दाशरथिः** पुष्पाणि संजातानि यासां ताः **पुष्पिताः सुरभीः** आमोदमानाः **वनस्थलीः पश्यन्ययौ** ॥

**रामादेशादनुगता सेना तस्यार्थसिद्धये ।**
**पश्चादध्ययनार्थस्य धातोरधिरिवाभवत् ॥ ९ ॥**

**रामादेशादनुगता सेना तस्य** शत्रुघ्नस्य । अध्ययनमर्थोऽभिधेयो यस्य तस्य [ **अध्ययनार्थस्य** ] **धातोः** 'इङध्ययने' इत्यस्य धातोः **पश्चात् अधिः** अध्युपसर्गः **इव** । **अर्थसिद्धये** प्रयोजनसाधनायेत्येकत्र । अन्यत्राभिधेयसाधनाय । **अभवत्** । 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु ।' इत्यमरः । यथा 'इङिकावध्युपसर्गं न व्यभिचरतः' इति न्यायेनाध्युपसर्गः स्वयमेवार्थसाधकस्य धातोः संनिधिमात्रेणोपकरोति सेनापि तस्य तद्वदिति भावः ॥

**आदिष्टवर्त्मा मुनिभिः स गच्छंस्तपतां वरः ।**
**विरराज रथप्रष्ठैर्वालखिल्यैरिवांशुमान् ॥ १० ॥**

---

१ निबर्हयितुम्. २ यथा उत्सर्गं 'कर्मण्यण्' इत्यादि सामान्यविधिं निषेद्धुमपवादः 'आतोऽनुपसर्गे कः' इत्यादि विशेषविधिः शक्तस्तथेत्यर्थः । इ. दि०. ३ 'अनुयातं सेनाद्यं तस्य सिद्धये' इ. भा०. ४ 'गच्छन्मतिमताम्' 'तरतां'—'वपुषाम्' इ. पा०.

रथप्रष्ठैः रथाग्रगामिभिः। 'प्रष्ठोऽग्रगामिनि' इति निपातः। मुनिभिः पूर्वोक्तैः। आदिष्टवर्त्मा निर्दिष्टमार्गः गच्छन् तपतां देदीप्यमानानां मध्ये वरः श्रेष्ठः स शत्रुघ्नः। वालखिल्यैः मुनिभिः अंशुमान् सूर्यः इव। विरराज। तेऽपि रथप्रष्ठा इत्यनुसंधेयम्॥

तस्य मार्गवशादेका बभूव वसतिर्यतः।
रथस्वनोत्कण्ठमृगे वाल्मीकीये तपोवने ॥ ११ ॥

यतः गच्छतः। इण्धातोः शतृप्रत्ययः। तस्य शत्रुघ्नस्य मार्गवशात् [ रथस्वनोत्कण्ठमृगे ] रथस्वनैः उत्कण्ठा उद्ग्रीवा मृगा यस्मिंस्तस्मिन् वाल्मीकीये वाल्मीकिसंबन्धिनि। 'वृद्धाच्छः' इति छप्रत्ययः। तपोवने एका वसतिः रात्रिः बभूव। तत्रैकां रात्रिमुषित इत्यर्थः। 'वसती रात्रिवेश्मनोः' इत्यमरः॥

तमृषिः पूजयामास कुमारं क्लान्तवाहनम्।
तपःप्रभावसिद्धाभिर्विशेषप्रतिपत्तिभिः ॥ १२ ॥

क्लान्तवाहनं श्रान्तयुग्यं तं कुमारं शत्रुघ्नम् ऋषिः वाल्मीकिः तपःप्रभावसिद्धाभिः विशेषप्रतिपत्तिभिः उत्कृष्टसंभावनाभिः पूजयामास॥

तस्यामेवास्य यामिन्यामन्तर्वत्नी प्रजावती।
सुतावसूत संपन्नौ कोशदण्डाविव क्षितिः ॥ १३ ॥

तस्यामेव यामिन्यां रात्रौ अस्य शत्रुघ्नस्य। अन्तरस्या अस्तीति अन्तर्वत्नी गर्भिणी। 'अन्तर्वत्नी च गर्भिणी' इत्यमरः। 'अन्तर्वत्पतिवतोर्नुक्' इति ङीप् नुगागमश्च। प्रजावती भ्रातृजाया सीता। क्षितिः संपन्नौ समग्रौ कोशदण्डौ इव। सुतौ असूत॥

संतानश्रवणाद्भ्रातुः सौमित्रिः सौमनस्यवान्।
प्राञ्जलिर्मुनिमामन्त्र्य प्रातर्युक्तरथो ययौ ॥ १४ ॥

भ्रातुः ज्येष्ठस्य संतानश्रवणात् हेतोः सौमनस्यवान् प्रीतिमान् सौमित्रिः शत्रुघ्नः प्रातः युक्तरथः सज्जरथः सन्। प्राञ्जलिः कृताञ्जलिः मुनिम् आमन्त्र्य आपृच्छ्य ययौ॥

स च प्राप मधूपघ्नं कुम्भीनस्याश्च कुक्षिजः।
वनात्करमिवादाय सत्त्वराशिमुपस्थितः ॥ १५ ॥

स शत्रुघ्नः च मधूपघ्नं नाम लवणपुरं प्राप। [ कुम्भीनस्याः ] कुम्भीनसी नाम रावणस्वसा तस्याः कुक्षिजः पुत्रो लवणः च वनात् करं बलिम् इव सत्त्वानां प्राणिनां राशिं [ सत्त्वराशिम् ] आदाय उपस्थितः प्राप्तः॥

१ तदुक्तं भागवते-वालखिल्याः सहस्राणि षष्टिर्ब्रह्मर्षयोऽमलाः। पुरतोऽभिमुखं यान्ति स्तुवन्ति स्तुतिभिर्विभुम्॥ इति॥ २ उत्क-त्की-त्कं इ. पा० ३ शत्रुघ्नं, ४ श्रान्त, ५ विषय इ. पा० ६ संपन्ना इ. पा० ७ उपादाय इ. पा०

धूमधूम्रो वसागन्धी ज्वालाबभ्रुशिरोरुहः।
क्रव्याद्गणपरीवारश्चिताग्निरिव जंगमः ॥ १६ ॥

किंभूतो लवणः। [ धूमधूम्रः ] धूम इव धूम्रः कृष्णलोहितवर्णः। 'धूम्रधूमलौ कृष्णलोहिते' इत्यमरः। वसागन्धो हृन्मेदोगन्धः सोऽस्यास्तीति वसागन्धी। 'हृन्मेदस्तु वपा वसा' इत्यमरः। [ ज्वालाबभ्रुशिरोरुहः ] ज्वाला इव बभ्रवः पिङ्गलाः शिरोरुहाः केशा यस्य स तथोक्तः। 'त्रिपुले नकुले विष्णौ बभ्रुः स्यात्पिङ्गले त्रिषु।' इत्यमरः। [ क्रव्याद्गणपरीवारः ] क्रव्यं मांसमदन्तीति क्रव्यादो राक्षसाः। तेषां गण एव परीवारो यस्य स तथोक्तः। अत एव जंगमः चरिष्णुः चिताग्निः इव स्थितः। कृशानुपक्षे धूमधूम्रवर्णः। ज्वाला एव शिरोरुहाः। क्रव्यादो गृध्रादयः। इत्यनुसंधेयम् ॥

अपशूलं तमासाद्य लवणं लक्ष्मणानुजः।
रुरोध संमुखीनो हि जयो रन्ध्रप्रहारिणाम् ॥ १७ ॥

लक्ष्मणानुजः शत्रुघ्नः अपशूलं शूलरहितं तं लवणम् आसाद्य रुरोध। तथा हि। रन्ध्रप्रहारिणां रन्ध्रप्रहरणशीलानाम्। अपशूलत्वेवात्र रन्ध्रम्। जयः संमुखीनः हि संमुखदृश्यो हि। 'यथामुखसंमुखस्य दर्शनः खः' इति खप्रत्ययः। अधिकरणलक्षणोऽयंस्तु दुर्लभ एव ॥

नातिपर्याप्तमालक्ष्य मत्कुक्षेरद्य भोजनम्।
दिष्ट्या त्वमसि धात्रा भीतेनेवोपपादितः ॥ १८ ॥

इति संतर्ज्य शत्रुघ्नं राक्षसस्तज्जिघांसया।
प्रांशुमुत्पाटयामास मुस्तास्तम्बमिव द्रुमम् ॥ १९ ॥

शुघ्नम्। राक्षसः लवणः। अद्य मत्कुक्षेः। भुज्यत इति भोजनम्। भोज्यं मृगादिकं नातिपर्याप्तम् अनतिसमग्रम् आलक्ष्य दृष्ट्वा भीतेन इव धात्रा दिष्ट्या भाग्येन मे त्वमुपपादितः कल्पितः असि। इति शत्रुघ्नं संतर्ज्य [ तज्जिघांसया ] तस्य शत्रुघ्नस्य जिघांसया हन्तुमिच्छया प्रांशुम् उन्नतं द्रुमम् मुस्तास्तम्बम् इव। अक्लेशेन। उत्पाटयामास ॥

सौमित्रेर्निशितैर्बाणैरन्तरा शकलीकृतः।
गात्रं पुष्परजः प्राप न शाखी नैर्ऋतेरितः ॥ २० ॥

नैर्ऋतेरितः रक्षओरितः शाखी अन्तरा मध्ये निशितैः बाणैः शकलीकृतः सन् सौमित्रेः शत्रुघ्नस्य गात्रं न प्राप। किं तु पुष्परजः प्राप ॥

विनाशात्तस्य वृक्षस्य रक्षस्तस्मै महोपलम्।
प्रजिघाय कृतान्तस्य मुष्टिं पृथगिव स्थितम् ॥ २१ ॥

१ समासाद्य. २ संमुखीनः इ. पा. ३ आलक्ष्य. ४ वेतनम् इ. पा. ५ संतर्ज्य. ६ विनाशं—विनाशात्तस्य वृक्षस्य, तस्मै—तं च इ. पा.

रक्षः लवणः तस्य वृक्षस्य विनाशात् हेतोः । महोपलं महान्तं पाषाणम् । पृथक् स्थितं कृतान्तस्य यमस्य मुष्टिमिव । मुष्टिशब्दो द्विलिङ्गः । तस्मै शत्रुघ्नाय प्रजिघाय प्रहितवान् ॥

ऐन्द्रमस्त्रमुपादाय शत्रुघ्नेन स ताडितः ।
सिकतात्वादपि परां प्रपेदे परमाणुताम् ॥ २२ ॥

स महोपलः शत्रुघ्नेन ऐन्द्रम् इन्द्रदेवताकम् अस्त्रम् उपादाय ताडितः अभिहतः सन् । सिकतात्वात् सिकताभावात् अपि परां परमाणुतां प्रपेदे । यतोऽणुर्नास्ति स परमाणुरित्याहुः ॥

तमुपाद्रवदुद्यम्य दक्षिणं दोर्निशाचरः ।
एकताल इवोत्पातपवनप्रेरितो गिरिः ॥ २३ ॥

निशाचरः राक्षसः दक्षिणं दोः । 'ककुद्दोषणी' इति भगवतो भाष्यकारस्य प्रयोगाद्दोषशब्दस्य नपुंसकत्वं द्रष्टव्यम् । 'भुजबाहू प्रवेष्टो दोः' इति पुंलिङ्गसाहचर्यात्पुंस्त्वं च । तथा च प्रयोगः—'दोषं तस्य तथाविधस्य भजते' इति । सव्येतरं बाहुम् उद्यम्य एकस्तालस्तदाख्यवृक्षो यस्मिन्स एकतालः [ उत्पातपवनप्रेरितः ] उत्पातपवनेन प्रेरितः गिरिः इव तं शत्रुघ्नम् उपाद्रवत् अभिद्रुतः ॥

कार्ष्णेन पत्रिणा शत्रुः स भिन्नहृदयः पतन् ।
आनिनाय भुवः कम्पं जहाराश्रमवासिनाम् ॥ २४ ॥

स शत्रुः लवणः । कार्ष्णेन वैष्णवेन । पत्रिणा बाणेन । उक्तं च रामायणे—'एवमेष प्रजनितो विष्णोस्तेजोमयः शरः' इति । 'विष्णुर्नारायणः कृष्णः' इत्यमरः । भिन्नहृदयः पतन्भुवः कम्पम् आनिनाय आनीतवान् । देहभारादित्यर्थः । आश्रमवासिनां कम्पं जहार । तन्नाशादकुतोभया बभूवुरित्यर्थः ॥

वयसां पङ्क्तयः पेतुर्हतस्योपरि रक्षसः ।
तत्प्रतिद्वन्द्विनो मूर्ध्नि दिव्याः कुसुमवृष्टयः ॥ २५ ॥

हतस्य रक्षसः उपरि वयसां पक्षिणां पङ्क्तयः पेतुः । तत्प्रतिद्वन्द्विनः शत्रुघ्नस्य मूर्ध्नि तु दिव्याः कुसुमवृष्टयः पेतुः ॥

स हत्वा लवणं वीरस्तदा मेने महौजसः ।
भ्रातुः सोदर्यमात्मानमिन्द्रजिद्वधशोभिनः ॥ २६ ॥

स वीरः शत्रुघ्नः लवणं हत्वा तदात्मानं महौजसः महाबलस्येन्द्रजिद्वधेन

१ सिकताधांत्, अथोपि परमां, इ. पा० २ 'दक्षिणं दोषमुद्यम्य राक्षसस्तमुपाद्रवत्' इ. वल्लटीकयोः पा०. ३ राक्षसो दक्षिणं करं; दोषं रक्षोप दक्षिणम्; इ. पा०. ४ दोःशब्दः प्रायः पुंलिङ्गः । अत एव 'दोषं रक्षोप दक्षिणम्' इति पाठः कर्तव्य इति दिनकरः । ५ शार्ङ्गः. ६ वनवासिनाम् इ. पा० ७ विद्विषः इ. पा०. ८ महामनः.

शोभिनः [ इन्द्रजिद्वधशोभिनः ] भ्रातुः लक्ष्मणस्य समानोदरे शयितं सोदर्यम् एकोदरं मेने । 'सोदराद्यः' इति यप्रत्ययः ॥

तस्य संस्तूयमानस्य चरितार्थैस्तपस्विभिः ।
शुशुभे विक्रमोदग्रं व्रीडयावनतं शिरः ॥ २७ ॥

चरितार्थैः कृतार्थैः कृतकार्यैः तपस्विभिः संस्तूयमानस्य तस्य शत्रुघ्नस्य [ विक्रमोदग्रं ] विक्रमेणोदग्रमुन्नतं व्रीडया लज्जया अवनतं नम्रं शिरः शुशुभे । विक्रान्तस्य लज्जैव भूषणमिति भावः ॥

उपकूलं स कालिन्द्याः पुरीं पौरुषभूषणः ।
निर्ममे निर्ममोऽर्थेषु मथुरां मधुराकृतिः ॥ २८ ॥

पौरुषभूषणः । अर्थेषु विषयेषु निर्ममः निस्पृहः । मधुराकृतिः सौम्यरूपः । स शत्रुघ्नः । कालिन्द्याः यमुनायाः उपकूलं कूले । विभक्त्यर्थेऽव्ययीभावः । मथुरां नाम पुरीं निर्ममे निर्मितवान् ॥

या सौराज्यप्रकाशाभिर्बभौ पौरविभूतिभिः ।
स्वर्गाभिष्यन्दवमनं कृत्वेवोपनिवेशिता ॥ २९ ॥

या पूः । शत्रुघ्नः शोभनो राजा यस्याः पुरः सा सुराज्ञी । सुराज्ञ्या भावः सौराज्यम् । तेन प्रकाशाभिः प्रकाशमानाभिः [ सौराज्यप्रकाशाभिः ] पौराणां विभूतिभिरैश्वर्यैः [ पौरविभूतिभिः ] स्वर्गस्याभिष्यन्दोऽतिरिक्तजनः । तस्य वमनमाहरणं [ स्वर्गाभिष्यन्दवमनं ] कृत्वा उपनिवेशिता उपस्थापिता इव बभौ । अत्र कौटिल्यः— 'भूतपूर्वमभूतपूर्वं वा जनपदं परदेशप्रवाहेण स्वदेशाभिष्यन्दवमनेन वा निवेशयेत्' इति ॥

तत्र सौधगतः पश्यन्यमुनां चक्रवाकिनीम् ।
हेमभक्तिमतीं भूमेः प्रवेणीमिव पिप्रिये ॥ ३० ॥

तत्र मथुरायां सौधगतः हर्म्यारूढः स चक्रवाकिनीं चक्रवाकवतीं यमुनाम् । हेमभक्तिमतीं सुवर्णरचनावतीं भूमेः प्रवेणीं वेणीम् इव । 'वेणिः प्रवेणी' इत्यमरः । पश्यन् पिप्रिये प्रीतः । 'प्रीङ् प्रीणने' इति धातोर्दैवादिकाल्लिट् ॥

संप्रति रामसंतानवृत्तान्तमाह—

सखा दशरथस्यापि जनकस्य च मन्त्रकृत् ।
संचस्कारोभयप्रीत्या मैथिलेयौ यथाविधि ॥ ३१ ॥

---

१ पुरं. २ 'मधुरान्' इ. पा०. ३ सवृद्धिभिः इ. पा० ४ त्वेव निर्मिते० ५ अभिष्यन्दवमनं शाखानगरम् इ. हिन. । अनुस्वानभानः कुमारी-अरकामनिवासैव वर्मानि वसुसंपद्गाम् । स्वर्गाभिष्यन्दवमनं कृत्वेवोपनिवेशितम् ॥ इति । ६ कालिन्दीं. ७ पंक्ति. ८ सवेणीम्. ९ स्याय. १० मन्त्रविद्. ११ मैत्र्ये.

**दशरथस्य जनकस्य च सखा मन्त्रकृत्** मन्त्रद्रष्टा स वाल्मीकिः **अपि** । 'सुकर्मपापमन्त्रपुण्येषु कृञः' इति क्विप् । [ **उभयप्रीत्या** ] उभयोर्दशरथजनकयोः प्रीत्या स्नेहेन **मैथिलेयौ** मैथिलीपुत्रौ **यथाविधि** यथाशास्त्रं **संचस्कार** संस्कृतवान् । जातकर्मादिभिरिति शेषः ॥

**स तौ कुशलवोन्मृष्टगर्भक्लेदौ तदाख्यया ।**
**कविः कुशलवावेव चकार किल नामतः ॥ ३२ ॥**

**स कविः** वाल्मीकिः कुशैर्दर्भैर्लवैर्गोपुच्छलोमभिः । 'लवो लवणकिञ्जल्कपक्ष्मगोपुच्छलोमसु ।' इति वैजयन्ती । उन्मृष्टो गर्भक्लेदो गर्भोपद्रवो ययोस्तौ **कुशलवोन्मृष्टगर्भक्लेदौ तौ** मैथिलेयौ [ **तदाख्यया** ] तेषां कुशानां च लवानां चाख्यया **नामतः** नाम्ना यथासंख्यं **कुशलवौ एव चकार किल** । कुशोन्मृष्टः कुशः । लवोन्मृष्टो लवः ॥

**साङ्गं च वेदमध्याप्य किंचिदुत्क्रान्तशैशवौ ।**
**स्वकृतिं गापयामास कविप्रथमपद्धतिम् ॥ ३३ ॥**

**किंचिदुत्क्रान्तशैशवौ** अतिक्रान्तबाल्यौ तौ **साङ्गं च वेदम् अध्याप्य** [ **कविप्रथमपद्धतिं** ] कवीनां प्रथमपद्धतिम् । कविताबीजमित्यर्थः । **स्वकृतिं** काव्यं रामायणाख्यं **गापयामास** । गापयतेर्लिट् । शब्दकर्मत्वात् 'गतिबुद्धि—' इत्यादिना द्विकर्मकत्वम् ॥

**रामस्य मधुरं वृत्तं गायन्तौ मातुरग्रतः ।**
**तद्वियोगव्यथां किंचिच्छिथिलीचक्रतुः सुतौ ॥ ३४ ॥**

तौ **सुतौ रामस्य वृत्तं मातुः अग्रतः मधुरं गायन्तौ तद्वियोगव्यथां** रामविरहवेदनां **किंचित् शिथिलीचक्रतुः** ॥

**इतरेऽपि रघोर्वंश्यास्त्रयस्त्रेताग्नितेजसः ।**
**तद्योगात्पतिवत्नीषु पत्नीष्वासन्द्विसूनवः ॥ ३५ ॥**

**रघोः वंश्याः** वंशे भवाः । त्रेतेत्यग्नित्रयं त्रेताग्नयः । तेषां तेज इव तेजो येषां ते **त्रेताग्नितेजसः** । **इतरे** रामादन्ये **त्रयः** भरतादयः **अपि तद्योगात्** तेषां योगाद्भरतादिसंबन्धात् **पतिवत्नीषु** भर्तृमतीषु जीवत्पतिकासु । ख्यातिमतीष्वित्यर्थः । 'पतिवत्नी सभर्तृका' इत्यमरः । 'अन्तर्वत्पतिवतोर्नुक्' इति ङीप्प्रत्ययो नुगागमश्च । **पत्नीषु द्विसूनवः आसन्** । द्वौ द्वौ सूनू येषां ते द्विसूनव इति विग्रहः । क्वचित्संख्याशब्दस्य वृत्तिविषये वीप्सार्थत्वं सप्तपर्णादिवत् ॥

**शत्रुघातिनि शत्रुघ्नः सुबाहौ च बहुश्रुते ।**
**मधुराविदिशे सून्वोर्निदधे पूर्वजोत्सुकः ॥ ३६ ॥**

**पूर्वजोत्सुकः** ज्येष्ठप्रियः **शत्रुघ्नः बहुश्रुते शत्रुघातिनि सुबाहौ च** त-

---

१ घनो. २ वोत्सृष्ट०. इदं न रामायणसंवादि । तत्रैतन्नामनिरुक्तिर्यथा-कुशमुष्टिमुपादाय लवं चैव तु स द्विजः। वाल्मीकिः प्रददौ ताभ्यां रक्षां भूतविनाशिनीम्॥ यस्तयोः पूर्वजो जातः स कुशैर्मन्त्रसत्कृतैः। निर्मार्जनीयस्तु मया कुश इत्यस्य नाम तत्॥ यश्चापरोऽभवत्ताभ्यां लवेन सुसमाहितः। निर्मार्जनीयो वृद्धाभिर्लवेति च स नामतः॥ इति । कुशमुष्टिं लवं चोपादाय रक्षा प्रदत्ता । तत्र कुशानामग्रभागः कुशमुष्टिरित्युच्यते । तेषामधोभागो लव इति । विशेषस्तत्र टीकायां द्रष्टव्यः । ३ कविः. ४ तद्योगात्.

बालकयोः सून्वोः । मथुरा च विदिशा च ते [ मथुराविदिशे ] नगर्यौ निदधे । निधाय गत इत्यर्थः ॥

भूयस्तपोव्ययो मा भूद्वाल्मीकेरिति सोऽत्यगात् ।
मैथिलीतनयोद्गीतनिःस्पन्दमृगमाश्रमम् ॥ ३७ ॥

स शत्रुघ्नः [ मैथिलीतनयोद्गीतनिःस्पन्दमृगं ] मैथिलीतनययोः कुशलवयोरुद्गीतेन निःस्पन्दमृगं गीतप्रियतया निश्चलहरिणं वाल्मीकेः आश्रमम् । भूयः पुनरपि तपोव्ययः संविधानकरणार्थं तपोहानिः मा भूत् इति हेतोः । अत्यगात् । अतिक्रम्य गत इत्यर्थः ॥

वशी विवेश चायोध्यां रथ्यासंस्कारशोभिनीम् ।
लवणस्य वधात्पौरैरीक्षितोऽत्यन्तगौरवम् ॥ ३८ ॥

वशी स लवणस्य वधात् हेतोः पौरैः पौरजनैः [ अत्यन्तगौरवम् ] अत्यन्तं गौरवं यस्मिन्कर्मणि तत्तथा ईक्षितः सन् । [ रथ्यासंस्कारशोभिनीम् ] रथ्यासंस्कारैस्तोरणादिभिः शोभते या ताम् अयोध्यां विवेश च ॥

स ददर्श सभामध्ये सभासद्भिरुपस्थितम् ।
रामं सीतापरित्यागादसामान्यपतिं भुवः ॥ ३९ ॥

स शत्रुघ्नः सभामध्ये सभासद्भिः सभ्यैः उपस्थितं सेवितं सीतापरित्यागात् भुवः असामान्यपतिम् असाधारणपतिं रामं ददर्श ॥

तमभ्यनन्दत्प्रणतं लवणान्तकमग्रजः ।
कालनेमिवधात्प्रीतस्तुराषाडिव शार्ङ्गिणम् ॥ ४० ॥

अग्रजः रामो लवणस्यान्तकं हन्तारं [ लवणान्तकं ] प्रणतं तं शत्रुघ्नम् । कालनेमिर्नाम राक्षसः । तस्य वधात् [ कालनेमिवधात् ] प्रीतः तुरं वेगं सहत इति तुराषाड् इन्द्रः । 'छन्दसि सहः' इति ण्विः । यद्वा सहतेर्ण्यन्तात् क्विप् । 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घः । 'सहेः साडः सः' इति षत्वम् । शार्ङ्गिणम् उपेन्द्रम् इव । अभ्यनन्दत् ॥

स पृष्टः सर्वतो वार्तमाख्यद्राज्ञे न संततिम् ।
प्रत्यर्पयिष्यतः काले कवेराद्यस्य शासनात् ॥ ४१ ॥

स शत्रुघ्नः पृष्टः सन् । सर्वतो वार्तं कुशलं राज्ञे रामाय आख्यत् आख्यातवान् । चक्षिङो लुङ् । 'चक्षिङः ख्याञ्' इति ख्याञादेशः । 'अस्यतिवक्ति—' इत्यङ् । 'आतो लोप इटि च' इत्याकारलोपः । ख्यातेर्वा लुङ् । संततिं कुशलवोत्पत्तिं न आख्यत् । कुतः । काले अवसरे प्रत्यर्पयिष्यतः आद्यस्य कवेः वाल्मीकेः शासनात् ॥

---

१ वशी, तनो, वृत्ती. २ आदि–आरि–गौरवमीक्षितः इ. पा० ३ उपस्थितम् इ. पा० ४ वार्ता.
५ का–द–प्रत्यर्पयिष्यतः इ. पा०

अथ जानपदो विप्रः शिशुमप्राप्तयौवनम् ।
अवतार्याङ्कशय्यास्थं द्वारि चक्रन्द भूपतेः ॥ ४२ ॥

अथ जनपदे भवः जानपदो विप्रः । कश्चिदिति शेषः । अप्राप्तयौवनं शिशुम् । मृतमिति शेषः । भूपतेः रामस्य द्वारि अङ्कशय्यास्थं यथा तथा अवतार्य अङ्कस्थलेनैवावरोप्य चक्रन्द चुक्रोश ॥

शोचनीयासि वसुधे या त्वं दशरथाच्च्युता ।
रामहस्तमनुप्राप्य कष्टात्कष्टतरं गता ॥ ४३ ॥

हे वसुधे दशरथात् च्युता या त्वं रामहस्तम् अनुप्राप्य कष्टात्कष्टतरं गता सती शोचनीया असि ॥

श्रुत्वा तस्य शुचो हेतुं गोप्ता जिह्राय राघवः ।
न ह्यकालभवो मृत्युरिक्ष्वाकुपदमस्पृशत् ॥ ४४ ॥

गोप्ता रक्षकः राघवः तस्य विप्रस्य शुचः शोकस्य हेतुं पुत्रमरणरूपं श्रुत्वा जिह्राय लज्जितः । कुतः । हि यस्मात् अकालभवो मृत्युः इक्ष्वाकूणां पदं राष्ट्रं [ इक्ष्वाकुपदं ] न अस्पृशत् । वृद्धे जीवति यवीयान्न म्रियत इत्यर्थः ॥

स मुहूर्तं क्षमस्वेति द्विजमाश्वास्य दुःखितम् ।
यानं सस्मार कौबेरं वैवस्वतजिगीषया ॥ ४५ ॥

स रामः दुःखितं द्विजं मुहूर्तं क्षमस्व इति आश्वास्य [ वैवस्वतजिगीषया ] वैवस्वतस्यान्तकस्यापि जिगीषया जेतुमिच्छया कौबेरं यानं पुष्पकं सस्मार ॥

आत्तशस्त्रस्तदध्यास्य प्रस्थितः स रघूद्वहः ।
उच्चचार पुरस्तस्य गूढरूपा सरस्वती ॥ ४६ ॥

स रघूद्वहः रामः आत्तशस्त्रः सन् । तत् पुष्पकम् अध्यास्य प्रस्थितः । अथ तस्य पुरः गूढरूपा सरस्वती अशरीरा वाक् उच्चचार उद्बभूव ॥

राजन्प्रजासु ते कश्चिदपचारः प्रवर्तते ।
तमन्विष्य प्रशमयेर्भवितासि ततः कृती ॥ ४७ ॥

हे राजन् ते प्रजासु कश्चिदपचारः वर्णधर्मव्यतिरेकः प्रवर्तते । तम् अपचारम् अन्विष्य प्रशमयेः । ततः कृती कृतकृत्यः भवितासि भविष्यसि ॥

इत्याप्तवचनाद्रामो विनेष्यन्वर्णविक्रियाम् ।
दिशः पपात पत्रेण वेगनिष्कम्पकेतुना ॥ ४८ ॥

१ कश्चिन्मृतम्. २ पुत्रम्. ३ शय्यायाः,-र्याः. ४ भाद्रनु. ५ ०प्राप्ता इ. पा०. ६ वधः इ. पा० ७ शहस्त इ. पा० ८ जिगीषया. ९ प्रतस्थे. १० प्चारस इ. पा० ११ व्यभिचारः इ. पा० १२ विदाम्, विचेष्यन् इ. पा०

इत्याप्तवचनात् रामः, वर्णविक्रियां वर्णोपचारं विनेष्यन् अपनेष्यन्वेगेन निष्कम्पकेतुना [ वेगनिष्कम्पकेतुना ] पत्त्रेण वाहनेन पुष्पकेण । 'पत्त्रं वाहनपक्षयोः' इत्यमरः । दिशः पपात धावति स्म ॥

अथ धूमाभिताम्राक्षं वृक्षशाखावलम्बिनम् ।
ददर्श कंचिदैक्ष्वाकस्तपस्यन्तमधोमुखम् ॥ ४९ ॥

अथ इक्ष्वाकुवंशप्रभवः ऐक्ष्वाकः रामः । 'कोपधादण्' इत्यणि कृते 'दाण्डिनायन-' इत्यादिनो यकारलोपनिपातः । धूमेन पीयमानेनाभिताम्राक्षं [ धूमाभिताम्राक्षं ] वृक्षशाखावलम्बिनम् अधोमुखं तपस्यन्तं तपश्चरन्तं कंचित् पुरुषं ददर्श ॥

पृष्टनामान्वयो राज्ञा स किलाचष्ट धूमपः ।
आत्मानं शम्बुकं नाम शूद्रं सुरपदार्थिनम् ॥ ५० ॥

राज्ञा [ पृष्टनामान्वयः ] नाम चान्वयश्च तौ पृष्टौ नामान्वयौ यस्य स तथोक्तः । धूमं पिबतीति धूमपः । 'सुपि' इति योगविभागात्कप्रत्ययः । स पुरुषः आत्मानं सुरपदार्थिनं स्वर्गार्थिनम् । अनेन प्रयोजनमपि पृष्ट इति ज्ञेयम् । शम्बुकं नाम शूद्रम् आचष्ट बभाषे किल ॥

तपस्यनधिकारित्वात्प्रजानां तमघावहम् ।
शीर्षच्छेद्यं परिच्छिद्य नियन्ता शस्त्रमाददे ॥ ५१ ॥

तपसि अनधिकारित्वात्प्रजानाम् अघावहं दुःखावहं तं शूद्रं शीर्षच्छेद्यम् । 'शीर्षच्छेदाद्यच्च' इति यत्प्रत्ययः । परिच्छिद्य निश्चित्य नियन्ता रक्षको रामः शस्त्रम् आददे जग्राह ॥

स तद्वक्त्रं हिमक्लिष्टकिञ्जल्कमिव पङ्कजम् ।
ज्योतिष्कणाहतश्मश्रु कण्ठनालादपातयत् ॥ ५२ ॥

स रामः [ ज्योतिष्कणाहतश्मश्रु ] ज्योतिष्कणैः स्फुलिङ्गैराहतानि दग्धानि श्मश्रूणि यस्य तत्तस्य वक्त्रं [ तद्वक्त्रम् ] । हिमक्लिष्टकिञ्जल्कं पङ्कजमिव । [ कण्ठनालात् ] कण्ठ एव नालं तस्मात् अपातयत् ॥

कृतदण्डः स्वयं राज्ञा लेभे शूद्रः सतां गतिम् ।
तपसा दुश्चरेणापि न स्वमार्गविलङ्घिना ॥ ५३ ॥

शूद्रः शम्बुकः राज्ञा स्वयं कृतदण्डः कृतशिक्षः सन् । सतां गतिं लेभे । दुश्चरेणापि स्वमार्गविलङ्घिना । अनधिकारदुष्टेनेत्यर्थः । तपसा न लेभे । अत्र मनुः—'राजभिः कृतदण्डास्तु कृत्वा पापानि मानवाः । निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा' इति ॥

---

१ धूमा०. २ शिर०. ३ 'काकुत्स्थः' इ. पा० ४ 'नामकर्मान्वयान् पृष्टः स राजानं धूमपः' इ० पा० ५ धूमिनं. ६ अपाहरत् इ० पा०. ७ मार्गविल०.

रघुनाथोऽप्यगस्त्येन [1]मार्गसंदर्शितात्मना ।
महौजसा [2]संयुयुजे शरत्काल इवेन्दुना ॥ ५४ ॥

रघुनाथः अपि मार्गसंदर्शितात्मना महौजसा अगस्त्येन । इन्दुना शरत्काल इव । संयुयुजे संगतः । इन्दावपि विशेषणं योज्यम् । रघुनाथेत्यत्र क्षुभ्नादित्वाण्णत्वाभावः ॥

कुम्भयोनिरलंकारं तस्मै दिव्यपरिग्रहम् ।
ददौ दत्तं समुद्रेण पीतेनेवात्मनिष्क्रयम् ॥ ५५ ॥

कुम्भयोनिः अगस्त्यः पीतेन समुद्रेण आत्मनिष्क्रयं इव आत्मनोचनमूल्यमिव दत्तम् । अत एव [ दिव्यपरिग्रहं ] परिगृह्यत इति व्युत्पत्त्या दिव्यपरिग्रहः । दिव्यानां परिग्राह्य इत्यर्थः । तम् अलंकारं तस्मै रामाय ददौ ॥

तं [3]दधन्मैथिलीकण्ठनिर्व्यापारेण बाहुना ।
पश्चान्निववृते रामः [4]प्राक्परासुर्द्विजात्मजः ॥ ५६ ॥

मैथिलीकण्ठनिर्व्यापारेण बाहुना तम् अलंकारं दधत् रामः पश्चात् निववृते निवृत्तः । परासुः मृतः द्विजात्मजः प्राक् रामात्पूर्वं निववृते ॥

तस्य पूर्वोदितां निन्दां द्विजः [5]पुत्रसमागतः ।
स्तुत्या निवर्तयामास त्रातुर्वैवस्वतादपि ॥ ५७ ॥

पुत्रसमागतः पुत्रेण संगतः द्विजः वैवस्वतात् अन्तकात् अपि त्रातुः रक्षकस्य । 'भीत्रार्थानां भयहेतुः' इत्यपादानात्पञ्चमी । तस्य रामस्य पूर्वोदितां पूर्वोक्तां निन्दां स्तुत्या निवर्तयामास ॥

तमध्वराय मुक्ताश्वं रक्षःकपिनरेश्वराः ।
मेघाः सस्यमिवाम्भोभिरभ्यवर्षन्नुपायनैः ॥ ५८ ॥

अध्वराय अश्वमेधाय मुक्ताश्वं तं रामं रक्षःकपिनरेश्वराः सुग्रीवविभीषणादयो राजानश्च मेघाः अम्भोभिः सस्यम् इव । उपायनैः अभ्यवर्षन् ॥

दिग्भ्यो निमन्त्रिताश्चैनमभि[6]जग्मुर्महर्षयः ।
न भौमान्येव धिष्ण्यानि हित्वा ज्योतिर्मयान्यपि ॥ ५९ ॥

निमन्त्रिताः आहूताः महर्षयः च भूम्याः संबन्धीनि भौमानि धिष्ण्यानि स्थानानि एव न । 'धिष्ण्यं स्थाने गृहे भेऽग्नौ' इत्यमरः । किं तु ज्योतिर्मयानि नक्षत्ररूपाणि धिष्ण्यानि अपि हित्वा दिग्भ्यः एनं रामम् अभिजग्मुः ॥

उपशल्यनिविष्टैस्तैश्चतुर्द्वारमुखी [7]बभौ ।
अयोध्या सृष्टलोकेव सद्यः पैतामही तनुः ॥ ६० ॥

---

१ मार्गं. २ संममृजे. ३ दध्यात् इ० पा०. ४ प्राग घायुः; स परासुः. ५ पुत्रेण संगतः, पुत्रसमन्वितः. ६ उपजग्मुः इ० पा०. ७ बभौ.

( चत्वारि द्वाराण्येव मुखानि यस्याः सा चतुर्द्वारमुखी अयोध्या । [ उपशल्यनिविष्टैः ] उपशल्येषु ग्रामान्तेषु निविष्टैः । 'ग्रामान्त उपशल्यं स्यात्' इत्यमरः । तैः महर्षिभिः । सद्यः सृष्टलोका पितामहस्येयं पैतामही तनुः मूर्तिः इव । बभौ ॥

श्लाघ्यस्त्यागोऽपि वैदेह्याः पत्युः प्राग्वंशवासिनः ।
अनन्यजानेः सैवासीद्यस्माज्जाया हिरण्मयी ॥ ६१ ॥

वैदेह्याः त्यागः अपि श्लाघ्यः वर्ण्यः एव । कुतः । यस्मात् । [ प्राग्वंशवासिनः ] प्राग्वंशः प्राचीनस्थूणो यज्ञशालाविशेषः । तद्वासिनः । नास्त्यन्या जाया यस्य तस्य अनन्यजानेः । 'जायाया निङ्' इति समासान्तो निङादेशः । पत्युः रामस्य हिरण्मयी सौवर्णी । 'दाण्डिनायन–' इत्यादिसूत्रेण निपातः । सा निजा एव जाया पत्नी आसीत् । कविवाक्यमेतत् ॥

विधेरधिकसंभारस्ततः प्रववृते मखः ।
आसन्यत्र क्रियाविघ्ना राक्षसा एव रक्षिणः ॥ ६२ ॥

ततः विधेः शास्त्रात् अधिकसंभारः अतिरिच्यमानपरिकरः मखः प्रववृते प्रवृत्तः । यत्र मखे । विहन्यन्त एभिरिति विघ्नाः प्रत्यूहाः । 'घनर्थे कविधानम्' इति कः । क्रियाविघ्नाः अनुष्ठानविघातकाः राक्षसा एव रक्षिणः रक्षकाः आसन् ॥

अथ प्राचेतसोपज्ञं रामायणमितस्ततः ।
मैथिलेयौ कुशलवौ जगतुर्गुरुचोदितौ ॥ ६३ ॥

अथ मैथिलेयौ मैथिलीतनयौ । 'स्त्रीभ्यो ढक्' । कुशलवौ गुरुणा वाल्मीकिना चोदितौ प्रेरितौ [ गुरुचोदितौ ] सन्तौ । प्राचेतसो वाल्मीकिः । 'उपज्ञायत इत्युपज्ञा । 'आतश्चोपसर्गे' इति कर्मण्यङ्प्रत्ययः । प्राचेतसस्योपज्ञा प्राचेतसोपज्ञम् । प्राचेतसेनादौ ज्ञातमित्यर्थः । 'उपज्ञा ज्ञानमाद्यं स्यात्' इत्यमरः । 'उपज्ञोपक्रमं तदाद्याचिख्यासायाम्' इति नपुंसकत्वम् । अय्यते ज्ञायतेऽनेनेत्ययनम् । रामस्यायनं चरितं रामायणं रामायणाख्यं काव्यम् । 'पूर्वपदात्संज्ञायामगः' इति णत्वम् । उत्तरायणमितिवत् । इतस्ततो जगतुः । गायतेर्लिट् ॥

वृत्तं रामस्य वाल्मीकेः कृतिस्तौ किंनरस्वनौ ।
किं तद्येन मनो हर्तुमलं स्यातां न शृण्वताम् ॥ ६४ ॥

रामस्य वृत्तं वर्तनं । वस्त्विति शेषः । वाल्मीकेः कृतिः काव्यम् । गेयमिति शेषः । तौ कुशलवौ किंनरस्वनौ किंनरकण्ठौ गायकौ । पुनरिति शेषः ।

---

१ प्राग्वंशजन्मनः इ० पा० । २ तदस्मिन्नेव, सैव संदम्भात् इ० पा० ३ क्रियारम्भे. ४ स्त-गितौ इ० पा० ५ 'नोदितौ' इ० पा०. ६ 'स्वतो' इ० पा०

अत एव तात्कि येन निमित्तेन तौ शृण्वतां मनो हर्तुं अलं शक्तौ न स्याताम्। सर्वं सरसमित्यर्थः ॥

रूपे गीते च माधुर्यं तयोस्तज्ज्ञैर्निवेदितम् ।
ददर्श सानुजो रामः शुश्राव च कुतूहली ॥ ६५ ॥

ते जानन्तीति तज्ज्ञाः। तैः तज्ज्ञैः अभिज्ञैः निवेदितं तयोः कुशलवयोः रूपे आकारे गीते च माधुर्यं रामणीयकं सानुजः रामः कुतूहली सानन्दः सन्यथासंख्यं ददर्श शुश्राव च ॥

तद्गीतश्रवणैकाग्रा संसदश्रुमुखी बभौ ।
हिमनिष्यन्दिनी प्रातर्निर्वातेव वनस्थली ॥ ६६ ॥

[ तद्गीतश्रवणैकाग्रा ] तयोर्गीतश्रवणे एकाग्रासक्ता अश्रुमुखी । आनन्दादिति भावः। संसद् सभा। प्रातः हिमनिष्यन्दिनी निर्वाता वातरहिता वनस्थली इव। बभौ शुशुभे। आनन्दपारवश्यान्निष्पन्दमास्त इत्यर्थः ॥

वयोवेषविसंवादि रामस्य च तयोस्तदा ।
जनता प्रेक्ष्य सादृश्यं नाक्षिकम्पं व्यतिष्ठत ॥ ६७ ॥

जनता जनानां समूहः। 'ग्रामजनबन्धुसहायेभ्यस्तल्' इति तल्प्रत्ययः। [ वयोवेषविसंवादि ] वयोवेषाभ्यामेव विसंवादि विलक्षणं तदा तयोः कुशलवयोः रामस्य च सादृश्यं प्रेक्ष्य । [ नाक्षिकम्पं ] न स्यादक्षिकम्पो यस्मिन्कर्मणि तद्यथा तथा। नञर्थस्य नशब्दस्य बहुव्रीहिः। व्यतिष्ठत अतिष्ठत्। 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम्। विस्मयादनिमिषमद्राक्षीदित्यर्थः ॥

उभयोर्न तथा लोकः प्रावीण्येन विसिष्मिये ।
नृपतेः प्रीतिदानेषु वीतस्पृहतया यथा ॥ ६८ ॥

लोकः जनः उभयोः कुमारयोः प्रावीण्येन नैपुण्येन तथा न विसिष्मिये न विस्मितवान् यथा नृपतेः प्रीतिदानेषु वीतस्पृहतया नैःस्पृह्येण विसिष्मिये ॥

गेये को नु विनेता वां कस्य चेयं कृतिः कवेः ।
इति राज्ञा स्वयं पृष्टौ तौ वाल्मीकिमशंसताम् ॥ ६९ ॥

गेये गीते को नु वां युवयोः विनेता शिक्षकः। नुशब्दः प्रश्ने। 'नु पृच्छायां वितर्के च' इत्यमरः। इयं च कस्य कवेः कृतिः इति राज्ञा स्वयं पृष्टौ तौ कुशलवौ वाल्मीकिम् अशंसताम् उक्तवन्तौ। विनेतारं कविं चेत्यर्थः। 'गेये केन विनीतौ वाम्' इति पाठे वामिति युष्मदर्थप्रतिपादकमव्ययं द्रष्टव्यम्। तथा चायमर्थः—केन पुंसा वां युवां गेये गीतविषये विनीतौ शिक्षितौ। कर्मणि निष्ठाप्रत्ययः ॥

---

१ सौन्दर्यं. २ तज्ज्ञनि०. ३ 'निस्यन्दिनी' इ० पा०. ४ च सा इ० पा० ५ स्पष्टिकम्पं, वीक्षामग्ना, मैदापन्ना, निर्निमेषा, विस्मयेन इ० पा० ६ प्रीतिदानेन. ७ केन विनीतौ वाम्.

अथ सावरजो रामः प्राचेतसमुपेयिवान् ।
उरीकृत्यात्मनो देहं राज्यमस्मै न्यवेदयत् ॥ ७० ॥

अथ सावरजः रामः प्राचेतसं वाल्मीकिम् उपेयिवान् प्राप्तः सन् । देहम् आत्मनः उरीकृत्य । आत्मानं स्थापयित्वेत्यर्थः । राज्यम् अस्मै प्राचेतसाय न्यवेदयत् समर्पितवान् ॥

स तावाख्याय रामाय मैथिलेयौ तदात्मजौ ।
कविः कारुणिको वव्रे सीतायाः [3]संपरिग्रहम् ॥ ७१ ॥

करुणा प्रयोजनमस्य कारुणिकः दयालुः । 'प्रयोजनम्' इति ठञ् । 'स्याद्दयालुः कारुणिकः' इत्यमरः । स कविः रामाय तौ मैथिलेयौ तदात्मजौ रामसुतौ आख्याय सीतायाः संपरिग्रहं स्वीकारं वव्रे ययाचे ॥

तात शुद्धा समक्षं नः स्नुषा ते जातवेदसि ।
दौरात्म्याद्रक्षसस्तां तु नात्रत्याः श्रद्दधुः प्रजाः ॥ ७२ ॥

हे तात ते स्नुषा सीता नः अस्माकमक्ष्णोः समीपं समक्षम् । 'अव्ययीभावे शरत्प्रभृतिभ्यः' इति समासान्तष्टच् । जातवेदसि वह्नौ शुद्धा । नास्माकमविश्वास इत्यर्थः । किं तु रक्षसः रावणस्य दौरात्म्याद् अत्रत्याः प्रजाः तां न श्रद्दधुः न विशश्वसुः ॥

ताः स्वचारित्रमुद्दिश्य प्रत्याययतु मैथिली ।
ततः पुत्रवतीमेनां प्रतिपत्स्ये त्वदाज्ञया ॥ ७३ ॥

मैथिली स्वचारित्रम् उद्दिश्य ताः प्रजाः प्रत्याययतु विश्वासयतु । विश्वासस्य बुद्धिरूपत्वात् 'णौ गमिरबोधने' इति इणो गम्यादेशो नास्ति । ततः अनन्तरं पुत्रवतीम् एनां सीतां त्वदाज्ञया प्रतिपत्स्ये स्वीकरिष्ये ॥

इति प्रतिश्रुते राज्ञा जानकीमाश्रमान्मुनिः ।
शिष्यैरानाययामास स्वसिद्धिं नियमैरिव ॥ ७४ ॥

राज्ञा इति प्रतिश्रुते प्रतिज्ञाते सति मुनिः आश्रमात् जानकीं शिष्यैः प्रयोज्यैः स्वसिद्धिं स्वार्थसिद्धिं नियमैः तपोभिः इव । आनाययामास ॥

अन्येद्युरथ काकुत्स्थः संनिपात्य पुरौकसः ।
कविमाह्वाययामास प्रस्तुतप्रतिपत्तये ॥ ७५ ॥

अथ काकुत्स्थः रामः । अन्येद्युः अन्यस्मिन्नहनि प्रस्तुतप्रतिपत्तये प्रकृतार्थानुसंधानाय पुरौकसः पौरान् संनिपात्य मेलयित्वा कविं वाल्मीकिम् आह्वाययामास आकारयामास ॥

---

१ दुहितृत्व इ० पा०. २ रामस्य, तदात्मजौ. ३ स परिग्रहं इ. पा०; अस्मात्परं—तदाश्रमं मुनेर्यातं तस्मै राजर्षिसत्तमः । समं हर्षविषादाभ्यां पुपुजे नीतिकोविदः [दुःखार्तं शोकसंतप्तं मुनिम्]॥ इत्य० केषिदधिकं म. ४ तदा इव, ५ आह्वायसामास इ. पा०. ६ संनिपात्य,

स्वरसंस्कारवत्योऽसौ पुत्राभ्यामथ सीतया ।
ऋचेवोदर्चिषं सूर्यं रामं मुनिरुपस्थितः ॥ ७६ ॥

अथ । स्वर उदात्तादिः । संस्कारः शब्दशुद्धिः । तद्वत्या [ स्वरसंस्कारवत्या ] ऋचा सावित्र्या उदर्चिषं सूर्यम् इव । पुत्राभ्याम् उपलक्षितया सीतया करणेनोदर्चिषं रामम् असौ मुनिः उपस्थितः उपतस्थे ॥

काषायपरिवीतेन स्वपदार्पितचक्षुषा ।
अन्वमीयत शुद्धेति शान्तेन वपुषैव सा ॥ ७७ ॥

कषायेण रक्तं काषायम् । 'तेन रक्तं रागात्' इत्यण् । तेन परिवीतेन संवृतेन [ काषायपरिवीतेन ] स्वपदार्पितचक्षुषा शान्तेन प्रसन्नेन वपुषा एव सा सीता शुद्धा साध्वी इति अन्वमीयत अनुमिता ॥

जनास्तदालोकपथात्प्रतिसंहृतचक्षुषः ।
तस्थुस्तेऽवाङ्मुखाः सर्वे फलिता इव शालयः ॥ ७८ ॥

[ तदालोकपथात् ] तस्याः सीतायाः कर्मणि आलोकपथाद्दर्शनमार्गात् प्रतिसंहृतचक्षुषः निवर्तितदृष्टयः सर्वे ते जनाः । फलिताः शालयः इव । अवाङ्मुखाः अवनतमुखाः तस्थुः ॥

तां दृष्टिविषये भर्तुर्मुनिरास्थितविष्टरः ।
कुरु निःसंशयं वत्से स्ववृत्ते लोकमित्यशात् ॥ ७९ ॥

आस्थितविष्टरः अधिष्ठितासनः मुनिः । हे वत्से भर्तुः दृष्टिविषये समक्षं स्ववृत्ते स्वचरिते विषये लोकं निःसंशयं कुरु । इति तां सीताम् अशात् शास्ति स्म ॥

अथ वाल्मीकिशिष्येण पुण्यमावर्जितं पयः ।
आचम्योदीरयामास सीता सत्यां सरस्वतीम् ॥ ८० ॥

अथ वाल्मीकिशिष्येण आवर्जितं दत्तं पुण्यं पयः आचम्य सीता सत्यां सरस्वतीं वाचम् उदीरयामास उच्चारयामास ॥

वाङ्मनःकर्मभिः पत्यौ व्यभिचारो यथा न मे ।
तथा विश्वंभरे देवि मामन्तर्धातुमर्हसि ॥ ८१ ॥

वाङ्मनःकर्मभिः पत्यौ विषये मे व्यभिचारः स्खलितं न यथा नास्ति यदि तथा तर्हि । विश्वं बिभर्तीति विश्वंभरा भूमिः । 'संज्ञायां भृतृ-' इत्यादिना खच्प्रत्ययः । 'अरुर्द्विषत्-' इत्यादिना मुमागमः । हे विश्वंभरे देवि माम् अन्तर्धातुं गर्भे वासयितुम् अर्हसि ॥

१ स्वेव, स्या च. २ सह. ३ सा तथा इ. पा०. ४ वह्निं. ५ इयमेव गायत्रीत्युच्यते । अनेन सीताया लोकातिगं पावित्र्यं सूचितम् । तदुक्तं-गायत्री वेदजननी गायत्री लोकपावनी । न गायत्र्याः परं जप्यमेतद्विज्ञाय मुच्यते ॥ इति. ६ दृष्टिम्, तेऽप्यधोमुखाः. ७ पुत्रे रौ इ० पा०. ८ ईशी......ईति.

एवमुक्ते तया साध्व्या रन्ध्रात्सद्योभवाद्भुवः ।
शातह्रदमिव ज्योतिः प्रभामण्डलमुद्ययौ ॥ ८२ ॥

साध्व्या पतिव्रतया तया सीतया एवमुक्ते सति सद्योभवाद् भुव रन्ध्रात् शातह्रदं वैद्युतं ज्योतिः इव प्रभामण्डलम् उद्ययौ ॥

तत्र नागफणोत्क्षिप्तसिंहासननिषेदुषी[3] ।
समुद्ररशना[4] साक्षात्प्रादुरासीद्वसुंधरा ॥ ३८ ॥

तत्र प्रभामण्डले नागफणोत्क्षिप्ते सिंहासने निषेदुष्यासीना [ नागफणोत्क्षिप्तसिंहासननिषेदुषी ] समुद्ररशना समुद्रमेखला साक्षात् । वसूनि धारयतीति वसुंधरा भूमिः । 'खचि ह्रस्वः' इति ह्रस्वः । प्रादुरासीत् ॥

सा सीतामङ्कमारोप्य भर्तृप्रणिहितेक्षणाम्[5] ।
मा मेति व्याहरत्येव तस्मिन्पातालमभ्यगात्[6] ॥ ८४ ॥

सा वसुंधरा भर्तरि प्रणिहितेक्षणां दत्तदृष्टिं [ भर्तृप्रणिहितेक्षणाम् ] सीतामङ्कम् आरोप्य तस्मिन् भर्तरि रामे मा मा इति मा हरेति व्याहरति वदति एव । व्याहरन्तमनादृत्येत्यर्थः । 'षष्ठी चानादरे' इति सप्तमी । पातालमभ्यगात् ॥

धरायां तस्य संरम्भं सीताप्रत्यर्पणैषिणः ।
गुरुर्विधिबलापेक्षी शमयामास धन्विनः ॥ ८५ ॥

[ सीताप्रत्यर्पणैषिणः ] सीताप्रत्यर्पणमिच्छतीति तथोक्तस्य धन्विनः आत्तधनुषः तस्य रामस्य धरायां विषये संरम्भं विधिबलापेक्षी दैवशक्तिदर्शी गुरुः ब्रह्मा शमयामास । अवश्यंभावी विधिरिति भावः ॥

ऋषीन्विसृज्य यज्ञान्ते सुहृदश्च पुरस्कृतान् ।
रामः सीतागतं स्नेहं निदधे तदपत्ययोः ॥ ८६ ॥

रामः यज्ञान्ते पुरस्कृतान् ऋषीन्सुहृदश्च विसृज्य सीतागतं स्नेहं तदपत्ययोः कुशलवयोः निदधे ॥

युधाजितश्च संदेशात्स देशं सिन्धुनामकम् ।
ददौ दत्तप्रभावाय भरताय भृतप्रजः ॥ ८७ ॥

किं च । भृतप्रजः स रामः युधाजितः भरतमातुलस्य संदेशात्सिन्धुनामकं देशं दत्तप्रभावाय दत्तैश्वर्याय । रामस्येति शेषः । भरताय ददौ ॥

भरतस्तत्र गन्धर्वान्युधि निर्जित्य केवलम् ।
आतोद्यं ग्राहयामास समत्याजयदायुधम् ॥ ८८ ॥

---

१ रन्ध्रं सद्योभवद्भुवः. २ 'ततः' इ० पा०. ३ 'निषादिनी.' ४ 'वसना.' ५ भर्तरि प्रहिते०, सभर्तृप्रहिते०. ६ अभ्ययात्. ७ रसातो. ८ सीताप्युद्धरणैषिणः इ. पा०. ९ मुनि. १० विरुधे. ११ युधाजित-युत-स्त इ, पा०, १२ कृतज्ञे, १३ दृष्टप्रभावाय, जेतुं रघुभाय. १४ भृत,

तत्र सिन्धुदेशे भरतः अपि युधि गन्धर्वान्निर्जित्य केवलम् एकम् आतोद्यं वीणाम् । 'ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् । वंशादिकं तु सुषिरं कांस्यतालादिकं घनम् । चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम् ॥' इत्यमरः । ग्राहयामास । आयुधं समत्याजयत् त्याजितवान् । ग्रहित्यजोर्ण्यन्तयोर्द्विकर्मकत्वमित्यनुसंधेयम् ॥

स तक्षपुष्कलौ पुत्रौ राजधान्योस्तदाख्ययोः ।
अभिषिच्याभिषेकार्हौ रामान्तिकमगात्पुनः ॥ ८९ ॥

स भरतः । अभिषेकार्हौ तक्षपुष्कलौ नाम पुत्रौ तदाख्ययोः । तक्षपुष्कलाख्ययोरित्यर्थः । पुष्कलं पुष्कलावत्यां तक्षं तक्षशिलायामिति राजधान्योः नगर्योः अभिषिच्य पुनः रामान्तिकम् अगात् ॥

अङ्गदं चन्द्रकेतुं च लक्ष्मणोऽप्यात्मसंभवौ ।
शासनाद्रघुनाथस्य चक्रे कारापथेश्वरौ ॥ ९० ॥

लक्ष्मणोऽपि रघुनाथस्य रामस्य शासनात् अङ्गदं चन्द्रकेतुं च तदाख्यौ आत्मसंभवौ पुत्रौ । कारापथो नाम देशः । तस्येश्वरौ [ कारापथेश्वरौ ] चक्रे ॥

इत्यारोपितपुत्रास्ते जननीनां जनेश्वराः ।
भर्तृलोकप्रपन्नानां निवापान्विदधुः क्रमात् ॥ ९१ ॥

इति आरोपितपुत्राः ते जनेश्वराः रामादयः भर्तृलोकप्रपन्नानां स्वर्यातानां जननीनां क्रमात् निवापान् श्राद्धादीन् विदधुः चक्रुः ॥

उपेत्य मुनिवेषोऽथ कालः प्रोवाच राघवम् ।
रहःसंवादिनौ पश्येदावां यस्तं त्यजेरिति ॥ ९२ ॥

अथ कालः अन्तकः मुनिवेषः सन् उपेत्य राघवं प्रोवाच । किमित्याह-रहस्येकान्ते संवादिनौ संभाषिणौ [ रहःसंवादिनौ ] आवां यः पश्येत् । रहस्यभङ्गं कुर्यादित्यर्थः । तं त्यजेः इति ॥

तथेति प्रतिपन्नाय विवृतात्मा नृपाय सः ।
आचख्यौ दिवमध्यास्स्व शासनात्परमेष्ठिनः ॥ ९३ ॥

स कालः तथा इति प्रतिपन्नाय नृपाय रामाय विवृतात्मा प्रकाशितनिजस्वरूपः सन् परमेष्ठिनः ब्रह्मणः शासनात् दिवम् अध्यास्स्व इति आचख्यौ ॥

विद्वानपि तयोर्द्वाःस्थः समयं लक्ष्मणोऽभिनत् ।
भीतो दुर्वाससः शापाद्रामसंदर्शनार्थिनः ॥ ९४ ॥

द्वाःस्थः द्वारि नियुक्तः लक्ष्मणः विद्वानपि पूर्वश्लोकोक्तं जानन्नपि रामसं-

---

१ पुष्कलौ. २ रामचन्द्रस्य. ३ पाङ्-पार-नाग-तारा—पथेश्वरौ इ० पा०. ४ इति शोपि०, समादेशि. ५ स्वर्गं. ६ मुनिवेषेण. ७ आरोढुम् इ० पा.। अस्मात्परं-गच्छ लक्ष्मण शीघ्रं त्वं माभूद्धर्मविपर्ययः । त्यागो वापि वधो वापि साधूनामुभयं समम् ॥ इति हे० पठति. ८ संदर्शिकाम्मिनः.

दर्शनार्थिनः दुर्वाससः मुनेः शापाद्भीतः सन् । तयोः कालरामयोः समयं संवादम् अभिनत् बिभेद ॥

स गत्वा सरयूतीरं देहत्यागेन योगवित् ।
चकारावितथां भ्रातुः प्रतिज्ञां पूर्वजन्मनः[1] ॥ ९५ ॥

योगवित् योगमार्गवेदी स लक्ष्मणः सरयूतीरं गत्वा देहत्यागेन पूर्वजन्मनः भ्रातुः प्रतिज्ञाम् अवितथां सत्यां चकार ॥

तस्मिन्नात्मचतुर्भागे प्राङ्नाकमधितस्थुषि ।
राघवः शिथिलं[2] तस्थौ भुवि धर्मस्त्रिपादिव ॥ ९६ ॥

चतुर्थो भागश्चतुर्भागः संख्याशब्दस्य वृत्तिविषये पूरणार्थत्वं शतांशवत् । आत्मचतुर्भागे तस्मिन् लक्ष्मणे प्राक् नाकम् अधितस्थुषि पूर्वं स्वर्गं जग्मुषि सति राघवः रामः । भुवि त्रिपाद् धर्म इव । शिथिलं तस्थौ । पादविकलो हि शिथिलं तिष्ठतीति भावः । त्रेतायां धर्मस्त्रिपादित्याहुः । पादश्चतुर्थांशः । अङ्घ्रिश्च ध्वन्यते । 'पादा रश्म्यङ्घ्रितुर्यांशाः' इत्यमरः । त्रयः पादा यस्यासौ त्रिपात् । 'संख्यासुपूर्वस्य' इत्यकारलोपः समासान्तः ॥

स[3] निवेश्य कुशावत्यां रिपुनागाङ्कुशं कुशम् ।
शरावत्यां[4] सतां सूक्तैर्जनिताश्रुलवं लवम् ॥ ९७ ॥
उदक्प्रतस्थे स्थिरधीः[5] सानुजोऽग्निपुरःसरः ।
अन्वितः पतिवात्सल्याद्गृहवर्जमयोध्यया ॥ ९८ ॥

युग्मम् । स्थिरधीः स रामः । रिपव एव नागा गजास्तेषामङ्कुशं निवारकं [ रिपुनागाङ्कुशम् ] कुशं कुशावत्यां पुर्यां निवेश्य स्थापयित्वा । सूक्तैः समीचीनवचनैः सतां जनिता अश्रुलवा अश्रुलेशा येन तं [ जनिताश्रुलवम् ] लवं लवाख्यं पुत्रम् । 'लवो लेशे विलासे च छेदने रामनन्दने' इति विश्वः । शरावत्यां पुर्याम् । 'शरादीनां च' इति शरकुशशब्दयोर्दीर्घः । निवेश्य । सानुजः अग्निपुरःसरः सन् । पत्नी भर्तरि वात्सल्यात् [ पतिवात्सल्यात् ] अनुरागात् । गृहान्वर्जयित्वा गृहवर्जम्[6] । 'द्वितीयायां च' इति णमुल् । अयं क्वचिदपरीप्सायामपीष्यते । 'अनुदात्तं पदमेकवर्जम्' इत्येतावतः शेषनाग व्याख्यातत्वात् । परीप्सा त्वरा । अयोध्यया अन्वितः अनुगतः उदक् प्रतस्थे ॥

जगृहुस्तस्य चित्तज्ञाः[7] पदवीं हरिराक्षसाः ।
कदम्बमुकुलस्थूलैरभिवृष्टां प्रजाश्रुभिः ॥ ९९ ॥

चित्तज्ञाः हरिराक्षसाः कदम्बमुकुलस्थूलैः प्रजाश्रुभिः अभिवृष्टां तस्य रामस्य पदवीं मार्गं जगृहुः । तेऽप्यनुजग्मुरित्यर्थः ॥

---

१ पूर्वजन्मनि इ० पा०. २ शिथिलः. ३ संनि०. ४ भ्रातृगतौ च-शरावत्यां इ० च पा०. ५ स्थिरधीः इ० पा०, ६ दृश्यतां-वर्जम् इ० पा०, ७ चित्तज्ञाः.

उपस्थितविमानेन तेन भक्तानुकम्पिना ।
चक्रे त्रिदिवनिःश्रेणिः सरयूरनुयायिनाम् ॥ १०० ॥

उपस्थितं प्राप्तं विमानं यस्य तेन [ उपस्थितविमानेन ] । भक्तानुकम्पत इति भक्तानुकम्पिना । तेन रामेण अनुयायिनां सरयूः त्रिदिवनिःश्रेणिः स्वर्गाधिरोहणी चक्रे । 'निःश्रेणिस्त्वधिरोहणी' इत्यमरः ॥

यद्गोप्रतरकल्पोऽभूत्संमर्द[2]स्तत्र मज्जताम् ।
अतस्तदाख्यया तीर्थं पावनं भुवि पप्रथे ॥ १०१ ॥

यत् यस्मात् तत्र सरय्वां मज्जतां संमर्दः । गोप्रतरो गोप्रतरणम् । तत्कल्पः [ गोप्रतरकल्पः ] अभूत् । अतः तदाख्यया गोप्रतराख्यया पावनं शोधकं तीर्थं भुवि पप्रथे ॥

स विभुर्विबुधांशेषु प्रतिपन्नात्ममूर्तिषु ।
त्रिदशीभूतपौरा[3]णां स्वर्गान्तरमकल्पयत् ॥ १०२ ॥

विभुः प्रभुः स रामः विबुधानामंशेषु [ विबुधांशेषु ] सुग्रीवादिषु प्रतिपन्नात्ममूर्तिषु सत्सु त्रिदशीभूता देवभुवनं गता ये पौरास्तेषां [ त्रिदशीभूतपौराणां ] नूतनसुराणां स्वर्गान्तरम् अकल्पयत् ॥

निर्वर्त्यैवं दशमुखशिरश्छेदकार्यं सुराणां
विष्वक्सेनः स्वतनुमविशत्सर्वलोकप्रतिष्ठाम् ।
लङ्कानाथं पवनतनयं चोभयं स्थापयित्वा
कीर्तिस्तम्भद्वयमिव गिरौ दक्षिणे चोत्तरे च ॥ १०३ ॥

विष्वक्सेनः विष्णुः एवं सुराणां दशमुखशिरश्छेदकार्यं निर्वर्त्य निष्पाद्य लङ्कानाथं विभीषणं पवनतनयं हनूमन्तं च उभयं कीर्तिस्तम्भद्वयं इव । दक्षिणे गिरौ त्रिकूटे च उत्तरे गिरौ हिमवति च स्थापयित्वा । सर्वलोकप्रतिष्ठां सर्वलोकाश्रयभूतां स्वतनुं स्वमूर्तिम् अविशत् ॥

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया
व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये
श्रीरामस्वर्गारोहणं नाम पञ्चदशः सर्गः ।

---

१ ०श्रेणी. २ विमर्दः. ३ पौरार्थम्. ४ भवच्छेदि, ०च्छेदकार्यं, भयोच्छेदिकार्यं इ० पा० ५ म०. ६ सत्यलोक० इ० पा०.

## षोडशः सर्गः ।

वृन्दारका यस्य भवन्ति भृङ्गा मन्दाकिनी यन्मकरन्दबिन्दुः ।
तवारविन्दाक्ष पदारविन्दं वन्दे चतुर्वर्गचतुष्पदं तत् ॥

**अथेतरे सप्त रघुप्रवीरा ज्येष्ठं पुरोजन्मतया गुणैश्च ।**
**चक्रुः कुशं रत्नविशेषभाजं सौभ्रात्रमेषां हि कुलानुसारि ॥ १ ॥**

अथ रामनिर्वाणानन्तरं इतरे लवादयः सप्त रघुप्रवीराः । पुरः पूर्वं जन्म यस्य तस्य भावस्तत्ता तया [ पुरोजन्मतया ] गुणैश्च ज्येष्ठं कुशं रत्नविशेषभाजं तत्तच्छ्रेष्ठवस्तुभागिनं चक्रुः । तदुक्तम्—'जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते' इति । तथा हि । सुभ्रातॄणां भावः सौभ्रात्रम् । 'हायनान्त-' इत्यादिना युवादित्वादण्प्रत्ययः । एषां कुशलवादीनां कुलानुसारि वंशानुगतं हि ॥

**ते सेतुवार्तागजबन्धमुख्यैरभ्युच्छ्रिताः कर्मभिरप्यवन्ध्यैः ।**
**अन्योन्यदेशप्रविभागसीमां वेलां समुद्रा इव न व्यतीयुः ॥ २ ॥**

सेतुर्जलबन्धः । वार्ता कृषिगोरक्षणादिः । 'वार्ता कृष्यादुदन्तयोः' इति विश्वः । गजबन्ध आकरेभ्यो गजग्रहणम् । ते मुख्यं प्रधानं येषां तैः [ सेतुवार्तागजबन्धमुख्यैः ] अवन्ध्यैः सफलैः कर्मभिः अभ्युच्छ्रिताः । अतिसमर्था अपि इत्यर्थः । ते कुशादयः । प्रविभज्यन्त इति प्रविभागाः । अन्योन्यदेशप्रविभागानां या सीमा ताम् [ अन्योन्यदेशप्रविभागसीमां ] वेलां समुद्रा इव । न व्यतीयुः नातिचक्रुः । अत्र कामन्दकः—'कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम् । खन्याकरधनादानं शून्यानां च निवेशनम् ॥ अष्टवर्गमिमं साधुः स्वयं वृद्धोऽपि वर्धयेत् ॥' इति ॥

**चतुर्भुजांशप्रभवः स तेषां दानप्रवृत्तेरनुपारतानाम् ।**
**सुरद्विपानामिव सामयोनिर्भिन्नोऽष्टधा विप्रससार वंशः ॥ ३ ॥**

चतुर्भुजो विष्णुः । तस्यांशा रामादयः । ते प्रभवाः कारणानि यस्य स तथोक्तः । [ चतुर्भुजांशप्रभवः ] दानं त्यागो मदश्च । 'दानं गजमदे त्यागे' इति विश्वः । प्रवृत्तिर्व्यापारः प्रवाहश्च । दानप्रवृत्तेः अनुपारतानां तेषां कुशलवादीनां स वंशः सामयोनिः सामवेदप्रभवो दानप्रवृत्तेरनुपारतानां सुरद्विपानां दिग्गजानां वंश इव । अष्टधा भिन्नः सन् । विप्रससार विस्तृतोऽभूत् । सामयोनिरित्यत्र पालकाप्यः—'सूर्यस्याण्डकपाले द्वे समानीय प्रजापतिः । हस्ताभ्यां परिगृह्याथ सप्त सामान्यगायत ॥ गायतो ब्रह्मणस्तस्मात्समुत्पेतुर्मतङ्गजाः ॥' इति ॥

**अथार्धरात्रे स्तिमितप्रदीपे शय्यागृहे सुप्तजने प्रबुद्धः ।**
**कुशः प्रवासस्थकलत्रवेषामदृष्टपूर्वां वनितामपश्यत् ॥ ४ ॥**

---

१ हे अरविन्दाक्ष कमलनेत्र विष्णो तव पदकमलं वन्दे । कीदृशं तदित्याह—वृन्दारकेति । वृन्दारकाः देवाः । मन्दाकिनी गङ्गा । अनेन तस्य कोऽपि महिमातिशय उक्तः । चतुर्वर्गः धर्मार्थकाममोक्षा एव चतुष्पदं यस्य. २ अभ्युच्छ्रिता. ३ प्रविभाग इ० पा०. ४ स्थिरदः इ० पा०.

अथ । अर्धं रात्रेरर्धरात्रः । 'अर्धं नपुंसकम्' इत्येकदेशसमासः । 'अहःसर्वैकदेश-संख्यातपुण्याच्च रात्रेः' इति समासान्तोऽच्प्रत्ययः । 'रात्राह्नाहाः पुंसि' इति नियमात्पुंस्त्वम् । अर्धरात्रे निशीथे स्तिमितप्रदीपे सुप्तजने शय्यागृहे प्रबुद्धः । न तु सुप्तः । कुशः । प्रवासस्थकलत्रवेषाम् प्रोषितभर्तृकावेषाम् । अदृष्टा पूर्वमित्यदृष्टपूर्वा ताम् [ अदृष्टपूर्वां ] । सुप्सुपेति समासः । वनिताम् अपश्यत् ॥

सा साधुसाधारणपार्थिवर्द्धेः स्थित्वा पुरस्तात्पुरुहूतभासः ।
जेतुः परेषां जयशब्दपूर्वं तस्याञ्जलिं बन्धुमतो बबन्ध ॥५॥

सा वनिता साधुसाधारणपार्थिवर्द्धेः सज्जनसाधारणराज्यश्रियः पुरुहूतभासः इन्द्रतेजसः परेषां शत्रूणां जेतुः बन्धुमतः तस्य कुशस्य पुरस्तात्स्थित्वा जयशब्दपूर्वं यथा तथा अञ्जलिं बबन्ध ॥

अथानपोढार्गलमप्यगारं छायामिवादर्शतलं प्रविष्टाम् ।
सविस्मयो दाशरथेस्तनूजः प्रोवाच पूर्वार्धविसृष्टतल्पः ॥ ६ ॥

अथ सविस्मयः पूर्वार्धेन शरीरपूर्वभागेन विसृष्टतल्पस्त्यक्तशय्यः [ पूर्वार्धविसृष्टतल्पः ] दाशरथेस्तनूजः कुशः । अनपोढार्गलम् अनुद्घाटितविष्कम्भम् अपि । 'तद्विष्कम्भेऽर्गलं न ना' इत्यमरः । अगारम् । आदर्शतलं छायामिव प्रविष्टां तां वनितां प्रोवाच अवदत् ॥

लब्धान्तरा सावरणेऽपि गेहे योगप्रभावो न च लक्ष्यते ते ।
बिभर्षि चाकारमनिर्वृतानां मृणालिनी हैममिवोपरागम् ॥ ७ ॥
का त्वं शुभे कस्य परिग्रहो वा किं वा मदभ्यागमकारणं ते ।
आचक्ष्व मत्वा वशिनां रघूणां मनः परस्त्रीविमुखप्रवृत्ति ॥ ८ ॥

युग्मम् । सावरणेऽपि गेहे लब्धान्तरा लब्धावकाशा । त्वमिति शेषः । योगप्रभावश्च ते न लक्ष्यते । मृणालिनी हैमं हिमकृतम् उपरागं उपद्रवं इव । अनिर्वृतानां दुःखितानां आकारं बिभर्षि च । न हि योगिनां दुःखमस्तीति भावः । किं च । हे शुभे त्वं का कस्य वा परिग्रहः पत्नी । ते तव मदभ्यागमे कारणं [ मदभ्यागमकारणं ] वा किम् । वशिनां जितेन्द्रियाणां रघूणां मनः परस्त्रीषु विषये विमुखा प्रवृत्तिर्यस्य तत् [ परस्त्रीविमुखप्रवृत्ति ] तथाभूतं मत्वा आचक्ष्व ॥

तमब्रवीत्सा गुरुणानवद्या या नीतपौरा स्वपदोन्मुखेन ।
तस्याः पुरः संप्रति वीतनाथां जानीहि राजन्नधिदेवतां माम् ॥ ९ ॥

सा वनिता तं पुरुं अब्रवीत् । अनवद्या अदोषा या पूः स्वपदोन्मुखेन

१ ख्रमो ऽद्धार्गला०—नो ऽनपोढा० इ० पा०, २ योगप्रभवा, ३ कुशेन, ४ नव पा, ५ पुरेवतार

# TRANSLATION.

## CANTO XI.

1. One Kauśika (Vis'vámitra), we are told, came to that lord of the earth (Das'aratha) and begged of him Ráma who still wore the side-locks of hair, for the removal of obstacles to his sacrifice; for, age is not taken into account in the case of persons of heroic energy.

2. The King, who honoured the learned, gave him (Ráma), though obtained with great difficulty, together with Lakshmana, to the sage; for, never was a prayer, even of those who begged for (the sacrifice of) life, refused in the family of the Raghus.

3. No sooner had the King ordered the cleaning and decoration of the streets of the city for their departure, than it was instantly done by the clouds helped by the winds sending down showers of water mixed with flowers.

4. The two (brothers), armed with bows and ready to execute the command of their father, fell at his feet; and the drops of tears from their father's eyes, too, fell upon them, who were about to set out on their travel, as they bent down to do him obeisance.

5. The two archers, with their locks of hair slightly wetted with the tears that had flowed from their father's eyes, followed that sage, with the ornamental arches formed with the eyes of the (gazing) citizens on the road.

6. Since the sage wished to take with him Ráma attended by Lakshmana alone, the king gave them his blessing and not an army; for, that (blessing) alone had the power to protect them.

7. The two brothers, after having touched the feet of all their mothers, as they came down to the path of the sage of great prowess, shone like the months of Chaitra and Vaiśákha moving in harmony with the course of the sun.

8. The gait of the two (princes), who had arms as unsteady as the waves, though playfully quick, looked graceful

Bharata (Ráma), like a whirl-wind risen from the burning ground.

17. Ráma, seeing her with her arm lifted up like a staff and advancing towards him with a girdle of human entrails hanging from her hips, cast away his aversion for the killing of a woman, and at the same moment discharged his arrow.

18. The hole which that arrow of Ráma made into the breast of Táḍaká, as hard as a stone, became an open door to Death who had not till then penetrated the country of the demons.

19. As she fell with her heart pierced by the arrow, she not only shook her own forest-ground but also the glory of Rávaṇa, which had attained stability by reason of his conquest of the three worlds.

20. As an *Abhisáriká* (a woman who goes to meet her lover by appointment), smitten in the heart by the unbearable arrows of Cupid, goes (at night) to the house of her lover, besmeared with fragrant saffron and sandal-paste, so did the demoness (the rover-by-night), pierced to the heart by the unbearable arrow of Ráma; and stained with offensive-smelling blood, go to the mansion of Death.

21. The destroyer of Táḍaká then obtained from the sage, who was pleased with his exploit, a missile deadly to the demons, with its spells, as the sun-stone receives from the sun the fire which destroys wood.

22. After this, when Ráma arrived at the holy hermitage of Vámana (the dwarf-incarnation of Vishṇu), of which he had heard from the sage, he grew restless in mind, though he did not recollect the heroic deeds of his previous life.

23. Thereafter the sage came to his own penance-grove where all his disciples had made preparations to worship him, the trees folding their leaves as if joining hands in adoration, and the deer eagerly lifting up their faces to look at him.

24. There by means of their arrows the two sons of Daśaratha by turn protected from obstacles the sage, now

engaged in the initiatory rites of a sacrifice, just as by means of their rays the sun and the moon, rising alternately, relieve the world from complete darkness.

25. Then, observing the sacrificial altar defiled with drops of blood as large as the *Bandhujiva* flowers, the sacrificial priests were seized with terror, abandoning their sacrificial work and letting the ladles of *vikaṅkata* wood drop (from their hands).

26. When the elder brother of Lakshmaṇa (Râma), instantly drawing out an arrow from the mouth of his quiver, turned his face upwards, he saw a host of demons in the sky, with banners waving in the wind produced by the wings of vultures.

27. He then shot only the two leaders of the enemies of sacrifices, and no one else. Will the Eagle who displays his prowess against mighty serpents, ever engage in a hostile action against (ordinary) *râjila* snakes?

28. He, who was skilled in the use of missiles, fixed on his bow a missile of immense velocity and having Wind for its presiding deity. By that he brought down (Mârîcha) the son of Tâḍakâ, mighty as he was like a mountain, as if he were (no better than) a seared leaf.

29. That accomplished warrior with his steel-pointed arrows cut to pieces the other demon called Subâhu who by his magical powers moved now here and now there (in the sky), and distributed his flesh among the birds (living) outside the hermitage.

30. Having congratulated the two (brothers), who had thus removed the obstacles to the sacrifice, on their martial prowess, the priests completed in due order the sacrificial rites of the lord of the clan who was observing the vow of silence.

31. Having taken the holy bath which concludes a sacrifice, the sage first gave his blessings to those two brothers, and then, with his hand whose surface had been pierced by the *darbha* grass, touched them whose side-locks of hair shook as they bowed down to him.

32. The king of Mithilâ, who had made preparations for a sacrifice, invited him (Vis'vâmitra). That self-controlled

sage, while going to Mithilâ, also took with him the two Raghu princes, who had their curiosity excited on hearing about the bow of that king.

33. When they had gone a certain distance, in the evening they took shelter below the lovely trees of that hermitage, where the wife of Gautama (the sage of long penance) had become for a moment Indra's spouse.

34. It was, they say, the favour of the dust of Râma's feet which destroys sin, that the wife of Gautama, who had been turned into a stone, regained her own charming form after a long time.

35. On hearing that the sage had arrived with the two princes of the Raghu family, King Janaka went out with materials of worship to receive him who seemed to be Virtue embodied, accompanied by Wealth and Desire.

36. The inhabitants of the town of Mithilâ, who drank with their eyes (*i.e.*, eagerly saw) the two brothers as if they were the two *Punarvasus* come down to the earth from the sky, thought in their minds even the twinkling of their eyes to be a deprivation (of joy).

37. When the performance of the sacrificial ceremony, (*lit.*, that in which the sacrificial post is used), was over, that exalter of the race of Kuśika, who knew when to seize an opportunity, informed the King of Mithilâ of Râma's eagerness to see the bow.

38. The king, observing the graceful frame of the boy born in a renowned family, and thinking how difficult it was to bend his bow, was distressed for having fixed that as the price for the winning of his daughter (as a bride).

39. And he said, "Revered Sir, I have no heart to give my consent that a young elephant should make a vain attempt to achieve a task which it is difficult even for mighty elephants to accomplish.

40. "For, O Revered Sir, many kings, the wielders of bows, being shamed by that bow, have gone away, despising their arms whose skin had been hardened by the rubbing of the bow-string, crying shame upon them."

41. The sage replied to him, "Be pleased to hear me as regards the strength which he possesses. Or rather, away with words. His strength will be manifest when matched against your bow, like that of the thunderbolt when *tried on* a mountain."

42. Thus, from the words of the trustworthy sage, he believed that Râma, though wearing side-locks of hair, was possessed of prowess, as one would believe in the burning power of (a spark of) fire though no larger than an *Indragopa* insect.

43. The King of Mithilâ then ordered several parties of attendants to fetch the bow, as Indra (the thousand-eyed god) commands the clouds to produce the bow composed of light (*i.e.*, the rain-bow).

44. Looking at the bow, dreadful like the lord of serpents when asleep, (the bow) with which Śiva (the god having the *sign of a bull on his banner*) discharged an arrow which pursued the sacrifice that fled in the form of a deer, the son of Daśaratha took it up.

45. Like Cupid stringing his delicate flowery bow, he, without any great effort, stretched the string of the bow though it had the strength of a mountain, being gazed at by the assembly with their eyes fixed in wonderment.

46. That bow, as it broke with a sound harsh like that of the thunderbolt, by being stretched too much by him, as it were proclaimed to Paras'urâma, of unappeasable wrath, that the race of Kshatriyas had revived again.

47. Then the King of Mithilâ, having hailed with delight the *S'ulka* (bride-money) in the form of his prowess the essence of which was tested against the bow of Śiva, offered (by word) to Râma his daughter, not born of the womb and like Lakshmî embodied.

48. *The King of Mithilâ, true to his* word, *immediately* gave his daughter, not born of the womb, in marriage to Râma in the presence of the radiant sage, thus having as it were Fire for a witness (to the holy ceremony).

49. And he of noble splendour sent his revered family-priest to the King of Kosalas with the message, "Be pleased to permit this family of Nimi to become your servant by accepting my daughter (for your daughter-in-law)."

50. The King was looking out (*lit.* searched) for a suitable daughter-in-law, and at the same time there came to him the Brâhmana with a welcome message; for, the desire of the meritorious, which partakes of the nature of the fruit of the wish-yielding tree, is fulfilled instantaneously.

51. That friend of Indra, of passions subdued, heard the message from the Brâhmaṇa, to whom a proper reception was accorded, and marched out, obscuring the rays of the sun with the dust raised by his army.

52. He reached Mithilâ, surrounding it with his soldiers who injured the trees in the gardens. That city endured the friendly siege, as a woman bears the close embrace of her lover.

53. The two kings, who adhered to the established usages and who resembled Varuṇa and Indra respectively, together performed the nuptial ceremonies of their sons and daughters in a manner befitting their greatness.

54. The chief of the family of Raghus (*i.e.*, Râma) married the daughter of the Earth; and Lakshmaṇa married her younger sister U'rmilâ. And their two younger brothers, possessed of excellent strength, married the two slender-waisted daughters of Kus'adhvaja.

55. The three sons together with the fourth, being married to their new brides, appeared like the four political expedients of that king, *viz.*, conciliation, use of money, sowing dissentions, and war, attended each by its own success.

56. Those princesses by their union with the princes, and the princes by theirs with the princesses, attained the highest happiness of their life. The union of these brides and bride-grooms was similar to the union of suffixes and stems.

57. Das'aratha, of affectionate disposition, who thus married all his four sons there, dismissed the King of Mithilâ when he had gone three stages in the journey, and returned to his own capital.

58. Now in the course of his journey it so happened that gusts of wind, blowing in a contrary direction and smashing

the tree-like flags, harassed the army very much, as the *currents of a river overflowing its banks* spread desolation over the country around.

59. (Soon) after this, the sun, with a formidable halo formed round him, looked like a jewel dropped from the hood of a serpent killed by Garuda and enclosed by that serpent's body.

60. The quarters, with the wings of hawks for their grey locks, and with the evening clouds for their blood-wet garments, became unfit to be seen, like women in menses with their hair dusky like hawk's wings, and their blood-wet clothes resembling evening clouds.

61. Female jackals, having resorted to the quarter where the sun had taken his station, began to howl in a fearful manner, as if inciting Paras'uráma, accustomed to perform the obsequial rites of his ancestors with the *blood of the* Kshatriyas.

62. Seeing the portent in the form of the adverse winds *and such other things, the lord of the earth*, who knew what was right to be done, asked his preceptor regarding its pacification; the latter mitigated his distress by telling him that it would have a happy end.

63. A mass of light, it is said, that immediately shot up, appeared before the army; (a mass) which, after a long time, when the soldiers had cleared their eyes, could be seen as possessing a human form.

64. Bearing *from his father the portion characterized by* the sacred thread, and from his mother the portion majestic by reason of the bow, he (Paras'uráma) looked like the sun attended by the moon, or like a sandal tree with a serpent (encircling it).

65. By whom, abiding by (*i.e.*, obeying) the command of his father, though breaking through the bounds of propriety, and with his soul made relentless by wrath, was first conquered, *when cutting off the head of his trembling* mother, the feeling of compassion, and then the earth.

66. Who, with a rosary of Rudrákshas resting on his right ear, appeared as it were to bear, in a disguised form,

the number twenty-one, indicative of the times that he had destroyed the Kshatriyas.

67. The King, whose sons were still young, seeing that Paraśurâma, who had taken a vow to destroy all the royal families, on account of his anger being roused at the murder of his father, and thinking of his own condition, became sad at heart.

68. The name "Râma," applying equally to his own son as well as to his dreadful enemy, became now to him like a jewel that is in a necklace and is on the hood of a serpent, pleasing and fearful at the same time.

69. Without paying any heed to the king who cried out, "An offering, an offering (for the sage)," he fixed his eyes upon where stood the elder brother of Bharata—the eyes whose pupils had become fierce and which were blazing with the fire of his anger against the Kshatriyas.

70. By him, eager to fight, firmly grasping the bow in his hand and letting the arrow pass through the interstices of his fingers, was addressed Râma who stood dauntless before him.

71. "The race of Kshatriyas is my enemy, since it has done me injury. Having destroyed it several times I was appeased. But I am (now) provoked by hearing of your exploit, like a sleeping snake when struck with a stick.

72. "Thou hast broken, it is said, the bow of the king of Mithilâ, never bent before by other kings. Hearing of that I think that my own pre-eminence in valour has been hurled down (eclipsed) as it were, by you.

73. "At one time the word "Râma," when uttered, applied to me alone in this world. Now that thou art rising to greatness, that word, having its application divided, makes me feel ashamed of myself.

74. "Bearing a missile which was unimpeded in its action even on the mountain (Krauñcha), I consider that I have two enemies who have offended me equally—Kârtavîrya, on account of his carrying off the calf of (my father's sacrificial) cow, and thou, intent on depriving me of my fame.

75. "My valour, though it has destroyed (the race) of the Kshatriyas, will not satisfy me so long as thou art unconquered. That is counted (regarded) the (true) greatness of fire when it burns in the ocean even as it does in dry grass.

76. "Know that the bow of Śiva which was broken by you had been deprived of its strength by the power of Vishṇu. Even a gentle wind pulls down a tree on the bank, when its roots have been already sapped by the current of the river.

77. "Draw, therefore, this bow of mine with an arrow fitted to it, after fastening the bow-string. Let alone an actual combat; if thou canst only accomplish this, I shall acknowledge myself vanquished by thee, with the strength of thy arms (being thus proved) equal to that of mine.

78. "Or, if thou hast lost courage, being frightened at the edge of my axe sending forth flames of fire, then join thou thy hands in prayer for protection—hands whose fingers have been hardened in vain by the friction of the bow-string."

79. When *Paraśurâma*, of terrible aspect, had thus spoken, Râma, with his lower lip quivering with a smile, gave him a fitting reply simply by taking up his bow.

80. Having obtained the bow which was his in his previous life, he looked beautiful beyond comparison. A fresh cloud is by itself charming; how much more then would it be when beautified by Indra's bow!

81. No sooner was the bow strung by the mighty prince, letting its one end rest on the ground, than the enemy of kings (*i.e.* Paraśurâma) lost all his splendour, like fire when reduced to mere smoke.

82. The people beheld those two standing face to face (*in an attitude of hostility*), *with the splendour of one waxing while that of the other waned, like the sun and the moon in the evening of the day of their opposition.*

83. Râma, who resembled the son of Śiva (Skanda), being softened by mercy on seeing Paraśurâma, whose valour

was rendered nugatory towards himself, and his own infallible arrow fixed on to the bow, addressed him thus :—

84. "Though thou wert the aggressor, I am unable to strike thee mercilessly as thou art a Brâhmaṇa. Tell me, then, which I shall destroy with this arrow:—thy locomotion or the world which thou hast acquired by thy sacrifices?"

85. To him the sage replied, "It is not that I do not know thee to be the Primeval Being in thy true nature. Desirous of seeing the divine energy of Vishṇu that is in thee after thou camest down to the earth, I roused thee to anger.

86. "To me, who reduced to ashes the enemies of my father and made a present of the earth together with the oceans to a fitting person, even this defeat inflicted upon me by thee, the Supreme Being, is honourable.

87. "Therefore, O thou, the foremost among the wise, spare my power of motion, so much to be desired, that I may go to holy places. If my way to heaven be closed, I shall not be distressed, as I am indifferent to sensual pleasures."

88. Râma agreed to that, saying, "Be it so;" and with his face turned towards the east he discharged the arrow. That arrow became to Paraśurâma, though righteous, an impassable barrier to his way to heaven.

89. Râma, too, touched the feet of the ascetic, begging to be forgiven. Humility itself on the part of the powerful towards enemies vanquished by force is conducive to fame.

90. "Having expelled from within me the spirit of chivalry (the result of the quality of passion) inherited from my mother, and instilling in me the spirit of peacefulness, the characteristic virtue of my paternal ancestors, thou hast certainly turned this defeat of mine, the result whereof is irreproachable, into a favour.

91. "I shall now go. May there be no obstacles in your way while accomplishing the mission of the gods!" Having spoken these words to Lakshmaṇa's elder brother (Râma) and Lakshmaṇa, the sage disappeared.

92. When he had gone away, the father, having embraced with his arms the victorious Râma, thought, through affection,

that he was certainly re-born. The obtainment of the joy, after he had experienced pain for a moment, was to him like a shower of rain to a tree seized by wild fire.

93. Then the lord of the earth, who resembled god Śiva, having passed some nights on the way, where charming tents had been erected, entered the city of Ayodhyâ in which the windows (of houses) were full of lotuses by reason of (the presence therein of) the eyes of the women gazing at the daughter of the King of Mithilâ.

## CANTO XII.

1. He who had enjoyed all worldly pleasures and reached the last stage of his life, now neared his absolution, just as the flame of a lamp which has consumed (all) oil and reached the end of the wick, is near its extinguishment at dawn.

2. Age in the guise of grey hair, coming to the root of his ears, as if through fear of Kaikeyî, said to him, "Confer royalty on Râma."

3. That report of the elevation (to the throne) of Râma, beloved of the citizens, gladdened each of them, as the canal refreshes the trees in a garden.

4. Kaikeyî, of cruel resolve, polluted the preparations made for his coronation, with the king's tears hot through grief.

5. Soothed by her husband, the angry lady gave out (*i.e.* demanded the fulfilment of) the two boons promised by him, as the earth, when sprinkled with rain, throws out a pair of serpents lurking in a hole.

6. By one of these she sent Râma into exile for fourteen years; (and) by the other she desired Royalty for her son, which resulted only in her own widowhood.

7. With tears had Râma first accepted the Earth bestowed on him by his father; but with joy did he afterwards receive his command—"Go to the forest."

8. The people, to their astonishment, saw the same colour (expression) on the face of Râma, both when he wore the pair of auspicious silken garments, and when he was clad in a pair of bark-garments.

9. Not making his father swerve from truth (*i.e.*, violate his promise), he, with Sitâ and Lakshmaṇa, entered (at once) the Daṇḍaka forest, and (also) the mind of every good man.

10. The King, too, afflicted with the (grief of) separation from him, recollecting the curse brought down (upon himself) by his own act, considered only the giving up of his body as the (proper) expiation.

11. That kingdom, with the princes exiled and the king dead, fell a prey to the enemies vigilant in seeking its weak points.

12. The body of councillors, (thus left) without a lord, caused Bharata, who was (then) living with his mother's relatives, to be brought by hereditary ministers who (with difficulty) suppressed their tears (before him).

13. When the son of Kaikeyî heard of his father's death brought on in that manner, he became averse not only to his own mother but also to Royalty.

14. And with an army he went in quest of Râma, seeing, with tears (in his eyes), the trees under which Râma had lived with Lakshmaṇa and which were pointed out to him by the dwellers of the hermitages.

15. Having related to Râma, then living in the forest near Chitrakûṭa, that their father had gone to heaven, he invited him to accept Royalty, the blessings of which had not been enjoyed by him (Bharata).

16. He thought he would be a *Parivettâ* (*i.e.*, one marrying when his elder brother is unmarried), if he were to receive the Earth, when his eldest brother had not accepted Royalty.

17. Of him (Râma), whom it was impossible to draw away from his deceased father's command, he (Bharata) asked for his pair of sandals, so that they might be made during his absence the presiding deities of the kingdom.

18. Dismissed by his brother with the words, 'So be it,' he did not enter the city (*i.e.*, the capital), but, living in Nandigrâma, ruled the kingdom as if it were a deposit.

19. Firm in his devotion to his eldest brother and averse to the desire (*lit.* thirst) for kingdom, Bharata thus made an expiation, as it were, for the purification of his mother's sin.

20. Râma, too, with Sîtá and his younger brother (Lakshmaṇa), subsisting on sylvan fare in the forest, observed, tranquil in mind, in his youth, the vow which the Ikshvâkus were accustomed to observe in their old age.

21. Taking shelter under a tree the shade of which was made stationary by his power, he was once lightly sleeping on the lap of Sîtâ, owing to fatigue.

22. It is said that a crow, son of Indra, scratched her breasts with his nails, as it were finding fault with the marks of amorous sport made by her husband.

23. Awakened by his wife, Râma discharged a reed-missile at him, who escaped from it with the loss of one eye.

24. Râma, apprehending the return of Bharata on account of the proximity of the place, left the Chitrakûta district, the deer in which felt sorry (at his departure).

25. Halting in the hermitages of the hospitable Rishis, he travelled on towards the southern quarter, as the Sun goes to the south after staying in the asterisms of the rainy season.

26. Sitâ (the daughter of the King of Videha), who followed him, appeared like Royalty, covetous of excellence, going after him though forbidden by *Kaikeyî*.

27. With the sweet-scented unguent given to her by Anasûyâ, she made the forest one in which the bees left the flowers (*i. e.* the bees were drawn from the flowers to her).

28. A demon called Virâdha, of a red-brown colour like an evening cloud, stood obstructing the way of Râma, as Râhu does that of the Moon.

29. From between them the destroyer of the people (*lit.* he who withered up the people) took off Sîtâ (daughter of the king of Mithilâ), as the drought which dries up the world takes off rain from between the months of S'râvana and Bhâdrapada.

30. Having crushed him to death, the two descendants of Kakutstha buried him in the earth, lest he (*i. e.* his body) should defile the district with foul smell.

31. Then by the advice of Agastya (*lit.* the pitcher-born), Râma dwelt in Pañchavaṭî, not abandoning moral rectitude, as the Vindhya Mountain stands in his original form, not transgressing the limits set to him.

32. There the younger sister of Râvaṇa, smitten with love, approached Ráma, as a female snake, oppressed with heat, resorts to a sandal tree.

33. In the very presence of Sîtâ, she made advances to him, after telling him her lineage; for. the lust of women, when grown to excess, knows no time.

34. "I have got a wife, O girl. Have thou my younger brother,"—so did Râma, having shoulders as lusty as those of a bull, command her who longed for sexual intercourse.

35. Not having been received well (*i. e.* rejected) by him (Lakshmaṇa) too, because of her having first approached his elder brother, she again resorted to Râma, like a river that touches both the banks.

36. The laugh of Sîtâ enraged her who had assumed for a time a gentle appearance, as the rise of the moon agitates the tide of the ocean (which has been) calm on account of the absence of wind.

37. "Thou shalt immediately get the fruit of this ridicule, mark me. Know that this act of thine is like an insult offered by a female deer to a tigress."

38. Saying this to Sîtâ who in fright sought her husband's lap, Śûrpaṇakhâ assumed her (original) form, that was true to her name.

39. Lakshmaṇa, who had first heard her speaking as sweetly as a cuckoo, made her out to be a demoness (*lit.* one skilled in magical wiles), as he now heard her terribly howling like a female jackal.

40. Immediately, with his sword drawn, he entered the hut and joined that horrible woman to a superfluity of ugliness (*i. e.* gave her more of that ugliness which she already possessed, by cutting off her nose and ears).

41. She threatened them from the sky, with her finger of the shape of a goad, having crooked nails and possessing joints hard like bamboo-knots.

42. Having reached Janasthâna speedily, she described to Khara and others the new way, of that sort, of insulting the demons, started by Râma.

43. That the demons marching against Râma put her, mutilated in the parts of her face, in front of them, was itself an evil omen.

44. Seeing the proud demons advancing with raised weapons, Râma placed his hope of victory on his bow, and Sîtâ under the care of Lakshmaṇa.

45. Although the son of Daśaratha was alone and the demons were in thousands, they saw him in the battle as many-fold as they (themselves) were.

46. Then that descendant of Kakutstha (Râma), of honourable conduct (in battle), did not forgive Dûshaṇa urged on by the wicked (demons), as he, pure in character, would not forgive censure directed against him by vile persons.

47. He received him (Dûshaṇa), Khara, and Triśiras with arrows, which, though discharged successively, flew as it were simultaneously from his bow.

48. By those sharp arrows which passed through their bodies and yet remained as untainted as before, were drunk the lives of the three, whilst their blood was drunk by the birds.

49. Of that vast army of demons, cut to pieces by the arrows of Râma, nothing was seen standing but the headless trunks.

50. That army of the enemies of the gods, having caused Râma, the showerer of arrows, to fight (with it), went to sleep under the shade of vultures, never to wake again.

51. Of those demons torn to pieces by the missiles of Râma, Śûrpaṇakhâ alone became the bearer of the evil tidings to Râvaṇa (*i. e.* she alone remained to carry the sad news to Râvaṇa).

52. On account of the punishment inflicted on his sister and the slaughter of his kinsmen, the younger brother of

Kubera (*i. e.* Râvaṇa) thought that Râma had placed his foot on his ten heads.

53. Deceiving the two descendants of Raghu by means of a demon (*i. e.* Mâricha) in the shape of a deer, he carried off Sitâ, being obstructed for a moment by the efforts (to rescue her) of the king of birds (Jaṭâyu).

54. While in search of Sitâ, they saw the vulture who had his wings cut off, and who had paid off the debt of friendship to Das'aratha with his life resorting to his throat (*i. e.* about to leave his body).

55. In words he told them that Sitâ had been carried off by Râvaṇa, (but) by his wounds he made known to them his great deed; and then he breathed his last.

56. With their grief for the death of their father renewed, they (two) performed the ceremony of his cremation and the subsequent funeral rites, as if he were their father.

57. Through the advice of Kabandha whose curse was removed by death (at the hands of Râma), there grew up a strong friendship between Râma and the monkey (Sugriva) who laboured under a similar misfortune.

58. That warrior (Râma), having killed Vâlin, placed Sugriva in his position, long desired by him, like an *A'deśa* (substitute) in the place of a root.

59. The monkeys, sent by their lord (Sugriva), wandered hither and thither in search of Sitâ, like so many desires of the afflicted Râma.

60. When intelligence about her was obtained on meeting with Sampâti, Mâruti (*lit.* the son of Wind) crossed the ocean, as one freed from all attachment transcends the worldly life.

61. In his seach (for her) he spied Sitâ surrounded in Laṅkâ by Râkshasis, like the great medicinal plant (life-restoring plant) encircled by poisonous creepers.

62. The monkey (*i. e.* Mâruti) delivered to her, as a token of recognition from her husband, a ring, which was as it were welcomed by her cool drops of tears of joy.

75. Though she ceased grieving ( *lit.* gave up her grief ) with the thought that her husband was alive, yet she felt ashamed (of herself) that she should have first lived after she had believed his death to be true.

76. The momentary suffering caused to the two sons of Das'aratha appeared as if it had occurred in a dream, when the bonds of the (serpent-) missile of Meghanâda (Indrajit, son of Râvaṇa) were dissolved at the approach of Garuḍa.

77. Then Paulastya (Râvaṇa) pierced Lakshmaṇa's breast with the *S'akti* weapon; (when) Râma, too, though not struck, had his breast pierced with grief.

78. Lakshmaṇa, having his agony removed by the great medicinal plant brought by Máruti, again played, by means of his arrows, the tutor-in-lamentation of the women in Laṅká (*i. e.*, caused bewailing among the women of Laṅká).

79. He left not a vestige of Meghanâda's war-cry and of his bow resplendent like the rain-bow (*lit.* the bow of Indra), as autumn keeps not a trace of the thunder of clouds and of the rain-bow.

80. Kumbhakarṇa, reduced to a condition similar to that of his sister (*i.e.* mutilated in the face) by the chief of the monkeys (Sugríva), opposed Ráma like a mountain, the red arsenic of which has been broken off with a chisel.

81. "You, who are so fond of sleep, have been in vain untimely awakened by your brother"—saying this, as it were, the arrows of Ráma sent him into long (eternal) sleep.

82. The other demons, too, fell amongst crores of monkeys, as the dust raised from the battle-field (fell) in the rivers of their blood.

83. Then came out Paulastya (Râvaṇa) from his palace for a fresh encounter, having resolved—"To-day the world shall be cleared either of Rávaṇa or of Ráma."

84. Seeing Râma on foot and the king of Laṅkâ in a chariot, Indra sent to him (Ráma) his car drawn by bay horses.

85. Resting on the arm of the charioteer of the gods (Mátali), Râma took his seat in that victorious car, the

banner-cloth of which was shaken by the breezes from the waves of the celestial Ganges.

86. Mátali invested him with the armour of the great Indra, on which the missiles of the enemies of the gods became as futile as the petals of the lotus.

87. The fight between Ráma and Rávaṇa achieved, as it were, its purpose, inasmuch as by it an opportunity was, after a long time, found by each of them showing his prowess at the sight of the other.

88. On account of the multiplicity of his arms, heads and thighs, the younger brother of Kubera (*i.e.*, Rávaṇa), though alone and not (surrounded by Rákshasas) as before, appeared, as it were, standing in the midst of the people of his mother's race (*i. e.* Rákshasas).

89. Ráma greatly esteemed the enemy who had conquered the (eight) guardians of the world, who had worshipped S'iva with (*i. e.* by offering) his own heads, and who had lifted the Kailása mountain.

90. The son of Pulastya (*i. e.* Rávaṇa), highly incensed, shot an arrow into his (Ráma's) right arm which was throbbing and thus prognosticating his union with Sitá.

91. An arrow discharged by Ráma having pierced through the heart of Rávaṇa, too, entered into the earth, as if to tell the welcome news to the snakes (residing there).

92. Matching missile with missile, as they did, the zeal of each for obtaining victory over the other waxed (*i. e.* became impetuous), like that of two disputants who meet words with words.

93. On account of their alternate display of equal valour, the fortune of victory became common to both (*i. e.* was equally balanced between them), like an altar-shaped wall between two (equally) infuriated elephants.

94. The volleys of arrows of each other did not endure (*i. e.* intercepted) the shower of flowers poured over them by the gods and the demons, (when) pleased at the (respective) assaults and repulses (of Ráma and Rávaṇa).

95. At last the demon (Rávaṇa) flung at his enemy the S'ataghni weapon, studded with iron spikes, which was, as it were, the Kûṭas'âlmali weapon snatched from (the hands of) Yama.

96. Before it reached his chariot, Ráma cut it off, and along with it the hope of the enemies of the gods, by means of arrows having crescent-shaped heads, with the ease with which a plantain-tree is lopped off.

97. And the matchless archer (Ráma) set on his bow the infallible *Bráhma* missile, directing it against him (Rávaṇa),—the missile which was, as it were, the physic for extracting the dart of grief from the heart of his beloved.

98. The (missile), with its blazing heads and multiplied tenfold in the sky, appeared like the body of the great serpent (S'esha) with its circle of terrible hoods.

99. With it, charged (as it was) with *Mantras* (spells appropriate to it), he brought down, in half a moment, the row of Rávaṇa's heads, which did not (even) feel the pain of the wounds (*i. e.* so quickly as not to make them feel the pain of the cutting).

100. The series of necks (heads) severed from the demon's body which was about to fall down, appeared like the image of the new (rising) sun, broken (multiplied) in water by ripples.

101. Though the gods saw his heads fall down, their mind did not put much faith in the fact, fearing their being again joined (to the body).

102. Then fell, on the (Râma) head of the enemy of Paulastya, on which the jewelled crown was soon to be fastened (placed), a shower of fragrant flowers poured by the gods and followed by swarms of bees, which, with their wings heavy with ichor, had left the broad temples of the elephants of the guardians of the world.

103. The charioteer of Indra having taken leave of Ráma who had at once unstrung his bow having performed the work of the gods, took to heaven the chariot which was drawn by a thousand bay horses, and the banner-staff of which

